## हलायुधप्रणीतं

## कविरहस्यम् ।

---

### श्रीगणेशाय नमः ।

जयन्ति मुराजित्पादनखदीधितिदीपिकाः ॥
महान्धकारविध्वंसान्मुक्तिमार्ग... सकलप्रकाशकाः ॥ १ ॥

लोकेषु शास्त्रेषु च ये प्रसिद्धाः काव्येषु ये सत्कविभिः प्रयुक्ताः ॥
उद्धृत्य तांश्चित्तविनोदनीयशब्दानहं धातुभिरुद्धरामि ॥ २ ॥

एकार्थानेकशब्दाश्च नानार्थाश्चैकवाचकाः ॥
सदृशार्थाभिधानाश्च भिन्नार्थाः सदृशाक्षराः ॥ ३ ॥

एकार्थास्तुल्यशब्दाश्च निबध्यन्तेत्र धातवः ॥
धातुपारायणाम्भोधिपारोत्तीर्णधिया मया ॥ ४ ॥

अस्त्यगस्तिमुनिज्योत्स्नापवित्रे दक्षिणापथे ॥
कृष्णराज इति ख्यातो राजा साम्राज्यदीक्षितः ॥ ५ ॥

गोपायति क्षितिमिमां चतुरब्धिसीमां
पापाज्जुगुप्सत उदारमतिः सदैव ॥

---

दक्षिणापथे दक्षिणदेशेऽित्यर्थः ।

) गोपायति ( रक्षति ) गुपूरक्षणे इति भौवादिकः परस्मैपदी 'गु-
धूपविच्छिपणिपनिभ्य आय' इत्यायप्रत्यये 'सनाद्यन्ता धातव' इति
... लट् । जुगुप्सते ( निन्दति ) गुपगोपने 'गुप्तिज्किद्भ्यः सन्'

विित्तं तु गोपयति यन्नवनीतकेभ्यो
धीरो न गुप्यति महत्यपि कार्यजाते ॥ ६ ॥
अग्निं पृणाति पृणति द्विजदेवताश्च
प्रीणाति बान्धवजनानतिथीन्पृणोति ॥
यः प्रीयते प्रणयिषु प्रयते च भृत्यान्
तं प्रीणयन्ति कविमुक्तिरसायनानि ॥ ७ ॥
धूनोति चम्पकवनानि धुनोत्यशोकं
चूतं धुनाति धुवति स्फुटितातिमुक्तम् ॥
वायुर्विधूनयति केसरपुष्परेणून्
यत्कानने धवति चन्दनमञ्जरीश्च ॥ ८ ॥

---

अत्र वृत्तिः ' निन्दाक्षमाव्याधिप्रतीकारेषु सन्निष्पतेऽन्यत्र यथाप्राप्तं प्रत्यया भवन्ति ' इति ' जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् ' इति पापशब्दस्यापादानसंज्ञाय ' अपादाने पञ्चमी ' इति पञ्चमी विभक्तिः ॥ गोपयति । ( रक्षति ) पट पुट लुट तुजि मिजि पिजि लुजि भजि लघि त्रसि [illegible] सि कुशि दसि कुशि घट घटि बृहि बर्ह बह्ल गुपेति चौरादिकः । गुप्य गुप् व्याकुलत्वे । दैवादिकः परस्मैपदी ।

( ७ ) पृणाति पॄ पालनपूरणयोः क्र्यादिः प्वादीनां ह्रस्वः । पृणति पृणप्रीणने तौदादिकः । प्रीणाति ( तृप्तान्करोति ) प्रीञ् तर्पणे कान्तौ २ क्र्यादिः । पृणोति पृप्रीतौ स्वादिः । प्रीयते प्रीङ्प्रीतौ दैवादिकः । इति प्रीञ् तर्पणे भौवादिकः । ञित्त्वेनोभयपदित्वात्प्रयतीत्यपि । प्रीणयन्ति प्रीञ् तर्पणे चौरादिकः ३३ नुगागमः ' धूञ्प्रीञो ' रिति नुक् वार्तिके

( ८ ) धूनोति धुञ् कम्पने अयं दीर्घान्तोपि ( सि० कौ० १४ स्वादिः उभयपदित्वाद्धूनुते इत्यपि । धुनोति धुञ् कम्पने पूर्वोक्त । धुनाति धूञ् कम्पने क्र्यादिः श्ना ' प्वादीनां ह्रस्वः ' । उभयपदित्वाद्धुनीते इत्यपिरूपं ज्ञेयम् धुवति धु विधूनने तुदादिः । त्रि- चुरादिपठितधूञ् कम्पने । णाविरयाधिकृत्य धूञ्प्रीञोर्नुग्वक्तव्यः इति

वरे

॥ श्रीः ॥

श्रीकालिदासकृतं

# राक्षसकाव्यम् ।

सटीकम् ।

कश्चिद्वनं बहुवनं विचरन्वयस्थो
वश्यां वनात्मवदनां वनितां वनार्द्राम् ।
तर्वर्यरिप्रदमुदीक्ष्य समुत्थितं खे
ना गामिमां मदकलः सकलां बभाषे ॥ १ ॥

कश्चिदिति । कश्चित् अनिर्दिष्टनामा ना पुरुषः वनितां स्त्रीं प्रति इमां प्रत्यक्षां सकलां समस्तां गां वाचं बभाषे । अब्रवीदित्यर्थः । किं कुर्वन् । वनं काननं विचरन् भ्रमन् । किंभूतं वनम् । बहुवनं बहूनि वनानि उदकानि यत्र तत् । बहूदकमित्यर्थः । 'जीवनं भुवनं वनम्' इत्यमरः । किंविधः ना । वयस्थः वयसि तारुण्ये तिष्ठतीति वयस्थः । युवेत्यर्थः । पुनः किंविधः ना । मदकलः मदेन कलः हर्षविभ्रमयुक्तः । किं कृत्वा । तरवः वृक्षाः तेषाम् अरिः अग्निः तस्य अरिः उदकं तत् प्रददातीति तर्वर्यरिप्रदः मेघः तम् उदीक्ष्य दृष्ट्वा । किंविधं मेघम् । खे आकाशे समुत्थितं समुत्पन्नम् । किंविधां वनिताम् । वश्याम् अधीनाम् । पुनः किंविधाम् । वनात्मवदनां वनं पानीयं तत् आत्मा यस्य असौ वनात्मा चन्द्रः । क्षीरोदमथनोत्पत्तेः । तेन तुल्यं वदनं यस्याः सा ताम् । 'वनं सलिल-कानने' इत्यमरः । पुनः किंविधाम् । वनार्द्रां वनेन मेघपानीयेन आर्द्राम् आर्द्रीकृताम् ॥

किमुवाचेत्याह—

पश्याब्जदृग्गिरितटेषु कुमातृसाह्वा-
न्भूदेवराजरिपुशत्रुसमावधूतान् ।
वैश्वानरारिजरिपुघ्नशराभिभूतै-
र्दृक्श्रोत्रशत्रुभिरुपासितपुष्पशोभान् ॥ २ ॥

पश्येति । हे अब्जदृक् पद्मनयने, गिरितटेषु कुमातृसाह्वान् कुत्सिता माता [illegible] येषां ते कुमातरः तैः समाना आह्वा नाम येषां तान् । कदम्बानित्यर्थः । [illegible] अवलोकय । 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः ।

किंभूतान् कुमातृसाह्वान्। भूदेवराजरिपुशत्रुसमावधूतान् भूदेवाः ब्राह्मणाः तेषां राजा सोमः तस्य रिपुः मेघः। आच्छादकत्वात्। तस्य शत्रुः वायुः। विक्षेपकत्वात्। तेन सम्यक् आसमन्तात् अवधूतान्। कम्पितानित्यर्थः। पुनः किंभूतान्। दृक्श्रोत्रशत्रुभिरुपासितपुष्पशोभान् दृशावेव श्रोत्रे कर्णौ येषां ते दृक्श्रोत्राः सर्पाः तेषां शत्रवो मयूराः। 'मयूरो बर्हिणो बर्ही नीलकण्ठो भुजंगभुक्' इत्यमरः। तैः उपासिता सेविता पुष्पशोभा येषां तान्। किंविधैः दृक्श्रोत्रशत्रुभिः। वैश्वानरारिजरिपुघ्नशराभिभूतैः वैश्वानरः अग्निः तस्य अरिः उदकं तत्र जाताः मत्स्याः तेषां रिपुः कैवर्तः सूर्यकः नाम मत्स्यविशेषः तं हन्तीति वैश्वानरारिजरिपुघ्नः कामः तस्य शराः बाणाः तैः अभिभूताः त्रस्ताः तैः ॥

पश्याद्रिसारसदृशीभिरमूभिरद्भि-
राप्लावयत्यमरगुब्धरणीमहिघ्नः ।
अब्दः सिताभिरसितः शबलं खगाभि-
र्वार्जैः सितैरिव विभाति वनं प्रबुद्धैः ॥ ३ ॥

पश्येति। हे वनिते, अमरगुप् अमराः देवाः तान् गोपायतीति अमरगुप् इन्द्रः अमूभिः अद्भिः तोयैः धरणीम् आप्लावयति सिञ्चति तं त्वं पश्य। किंभूताभिः अद्भिः। अद्रिसारसदृशीभिः पर्वतसारतुल्याभिः। किंभूतः अमरगुप्। अहिघ्नः अहिः वृत्रासुरः तं हन्तीति सः। 'अहिर्वृत्रासुरे सर्पे' इति विश्वः। अपः ददातीति अब्दः मेघः। 'अब्दः संवत्सरे मेघे' इति विश्वः। विभाति। किंभूतः अब्दः। सिताभिः शुक्लाभिः खगाभिः खम् आकाशं गच्छन्तीति खगाः बलाकाः ताभिः असितः शबलीकृतः। अत्रोत्प्रेक्ष्यते—सितैः वार्जैः वारि जातानि वार्जानि तैः कमलैः शबलं शबलीकृतं वनम् उदकमिव। किंविधैः वार्जैः। प्रबुद्धैः विकसितैः। 'आपः स्त्रीभूम्नि वार्वारि सलिलं कमलं जलम्' इत्यमरः ॥

गोष्ठं घृतं सुघृतवद्भिरमीभिरग्र्यं
गोभिः समुद्धरति यद्बहुधा हिमघ्नः ।
तद्गव्यमम्बरगतं शिखिजात्मसंस्थं
निस्यन्दमानमभिवर्धयतीह गोजान् ॥ ४ ॥

गोष्ठमिति। तत् गव्यं गोषु रश्मिषु भवं गव्यं नीरं इह भूमौ गोजान् गवि जाताः गोजाः तान् तृणादीन् अभिवर्धयति। वृद्धिं प्रापयतीत्यर्थः। किंभूतं गव्यम्। अम्बरगतम् अम्बरम् आकाशं तत्र गतं विद्यमानम्। पुनः किंविधम्। शिखिजात्मसंस्थं शिखी वह्निः तत्र जातः धूमः सः आत्मा स्वरूपं यस्य सः शिखिजात्मा मेघः तस्मिन् संस्था स्थितिः यस्य तत्। 'संस्था स्थितौ

नाशे' इति विश्वः । पुनः किंविधम् । निस्यन्दमानम् अभिस्रवत् । तत् किम् । यत् गोष्ठं गोषु रश्मिषु स्थितं घृतं नीरं वहुधा हिमघ्नः हिमं हन्तीति हिमघ्नः सूर्यः समुद्धरति ग्रसते । 'सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः' इति महाकविप्रयोगात् । कैः । अमीभिः गोभिः किरणैः । 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौर्लिङ्गं चिह्नशेफसोः ॥' इत्यमरः । किंभूतैः । सुघृतवद्भिः सुष्ठु घृतं पानीयं तद्वद्भिः । किंभूतं घृतम् । अग्र्यम् अग्रे भवं श्रेष्ठम् । उत्तममित्यर्थः ॥

अब्रुट्पलाशनिभदृग्घनजात्मवक्त्रा
वार्चस्वरेभनिभगा गजदोःसमोरूः ।
सीरिध्वजप्रसवतुल्यविषाह्वदासौ
त्रा संगता प्रमुदिता प्रसमीक्ष्य वार्दम् ॥ ५ ॥

अब्रुडिति । असौ स्त्री प्रमुदिता हृष्टा । वभूवेत्यर्थः । किं कृत्वा । वार्दं वाः नीरं ददातीति वार्दः तं मेघं प्रसमीक्ष्य अवलोक्य । किंभूता असौ । त्रा पुरुषेण संगता सहिता । पुनः किंविधा । अब्रुट्पलाशनिभदृक् अप्सु रोहतीति अब्रुट् पद्मं तस्य पलाशं पत्रम् । 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्' इत्यमरः । तन्निभे दृशौ दृष्टी यस्याः सा तथा । पुनः किंविधा । घनजात्मवक्त्रा घनात् जीमूतात् जातं घनजं नीरम् । 'घनजीमूतमुदिरजलमुग्धूमयोनयः' इत्यमरः । तत् आत्मा यस्य असौ घनजात्मा चन्द्रः । क्षीरोदमथनोत्पत्तेः । तेन तुल्यं वक्त्रं वदनं यस्याः सा । चन्द्रवक्त्रेति भावः । पुनः किंविधा । वार्चस्वरा वार्चः हंसः तस्य स्वरेण तुल्यः स्वरः यस्याः सा । एकस्वरस्य लोपः । पुनः किंविधा । उच्छृङ्खलान्यायेन इभनिभगा इभः हस्ती तेन निभं तुल्यं गच्छतीति इभनिभगा । पुनः किंविधा । गजदोःसमोरूः गजः हस्ती तस्य दोः करः । शुण्डेत्यर्थः । 'भुजवाहू प्रवेष्टो दोः' इत्यमरः । तेन समे ऊरू यस्याः सा । 'सक्थि क्लीवे पुमानूरुः' इत्यमरः । पुनः किंविधा । सीरिध्वजप्रसवतुल्यविषाह्वदा सीरो हलं तत् अस्यास्तीति सीरी वलभद्रः । 'सीरोऽर्कहलयोः पुंसि' इति मेदिनी । तस्य ध्वजः तालद्रुमः तस्य प्रसवे फले ताभ्यां तुल्यौ । विषं पानीयं सापरा आह्वा नाम यस्य तत् विषाह्वं क्षीरं पयः तत् दत्तः तौ विषाह्वदौ पयोधरौ कुचौ । सीरिध्वजप्रसवतुल्यौ विषाह्वदौ यस्याः सा । तालफलवत् उन्नतस्तनीत्यर्थः । 'तालाङ्को मुसली हली' इत्यमरः । 'विषं तु गरले तोये' इति विश्वः ॥

---

१. एतदनन्तरम् 'गोमध्यमध्ये मृगगोधरेहे सहस्रगोभूषणकिंकराणाम् । नादेन गोभृच्छिखरे प्रमत्ता नृत्यन्ति गोकर्णशरीरभक्षाः ॥' इत्यधिकं क्वचित्.

सूर्यांशुनामपतिरुन्नतदस्तगामी
वाङ्नामभिः परिवृतो विषनामदाभिः ।
उस्रावरः प्रमुदितः प्रतिनानदीति
गर्जन्तमीक्षणहितोच्चयतुल्यरूपम् ॥ ६ ॥

सूर्यांश्विति । असौ उस्रा गौः तस्याः वरः वृषः प्रमुदितः हृष्टः सन् प्रतिनानदीति प्रतिस्पर्धया अत्यर्थं नदति । किं कृत्वा । ईक्षणहितोच्चयतुल्यरूपम् ईक्षणानां हितं कज्जलं तस्य उच्चयः आधिक्यं यस्मिन् सः एव पर्वतः तेन तुल्यं रूपं यस्य सः मेघः तं गर्जन्तं वीक्ष्य शब्दायमानं दृष्ट्वा । किंभूतः वृषः । सूर्यांशुनामपतिः सूर्यः आदित्यः तस्य अंशवः रश्मयः तेषां नाम गोशब्दः तस्य पतिः । गोपतिरित्यर्थः । पुनः किंविधः । उन्नतदस्तगामी । पुनः किंविधः । वाङ्नामभिः परिवृतः । वाक्शब्देन गोशब्दः उच्यते । वाक् इति नाम वाङ्नाम तेन तुल्यं नाम यासां ताः वाङ्नामानः गावः । धेनव इत्यर्थः । ताभिः परिवृतः । वेष्टित इत्यर्थः । किंभूताभिः गोभिः । विषनामदाभिः । विषस्य नाम यस्य तत् एवंविधं दुग्धं तत् ददतीति विषनामदाः ताभिः । क्षीरदाभिरित्यर्थः ॥

एनं पयोदपतिरुन्नमितं पयोदं
खस्थं महीतलगतः प्रतिगर्जतीव ।
भित्त्वावनिं वनरुहाक्षि शिरोरुहाभ्यां
संप्रस्थितोऽमृतधरैरभिषिञ्च्यमानः ॥ ७ ॥

एनमिति । भो वनरुहाक्षि, वनं नीरं तत्र रोहतीति वनरुहं कमलं तद्वत् अक्षिणी यस्याः सा तस्याः संबोधनम् । पयोदपतिः । पयः क्षीरम् । 'पयः क्षीरं पयोऽम्बु च' इत्यमरः । तत् ददतीति पयोदाः गावः तासां पतिः वृषः प्रतिगर्जतीव । किं कृत्वा । शिरसि रुहतस्ते शिरोरुहे शृङ्गे ताभ्यां अवनीं पृथ्वीम् । 'क्ष्मावनिर्मेदिनी मही' इत्यमरः । भित्त्वा विदार्य । पुनः किं कृत्वा । एनम् उन्नमितं प्रसृतं पयोदं मेघं दृष्ट्वा । किंविधं पयोदम् । खस्थं आकाशस्थम् । किंभूतः वृषः । महीतलगतः भूतलस्थः । पुनः किंभूतः । अमृतधरैः अभिषिञ्च्यमानः । अमृतं उदकं धरन्तीति । 'पयः कीलालममृतम्' इत्यमरः । तैः मेघैः अभिषिञ्च्यमानः । पुनः किंविधः । संप्रस्थितः सम्यक्प्रस्थितः । प्रयाणाभिमुख इत्यर्थः ॥

स्रोतोजविक्षतजभूधरधातुरूपाः
खस्थाः पयोजदलदृक्शुचिशुक्रमासे ।

मासोर्नभस्यनभसोरतिसंपतन्त-
स्तीव्रं विषं विषधराः परिनिर्वपन्ति ॥ ८ ॥

स्रोत इति । भोः पयोजदलदृक् पद्मपलाशनयने, ते विषधराः मेघाः तीव्रं विषं पानीयं परिनिर्वपन्ति । प्रक्षिपन्तीत्यर्थः । किंविधाः विषधराः । स्रोतोजविक्षतजभूधरधातुरूपाः स्रोतसि जातं स्रोतोजं काञ्चनम्, विक्षतात् जातं विक्षतजं रुधिरम् । 'रक्तक्षतजशोणितम्' इत्यमरः । भूधराः पर्वताः, तेषां धातवः सुवर्णरूप्यादयः तैः तुल्यं रूपम् येषां ते । पुनः किंविधाः । खस्थाः आकाशे तिष्ठन्तीति आकाशस्थाः । 'नभोऽन्तरीक्षं गगनमनन्तं सुरवर्त्म खम्' इत्यमरः । शुचिशुक्रमासे शुचिश्च शुक्रमासश्च शुचिशुक्रमासौ तयोः समाहारः । 'ज्येष्ठे शुक्रः शुचिस्त्वयम् । आषाढे' इत्यमरः । आषाढज्येष्ठमासे नभस्यनभसोर्भाद्रपदश्रावणयोर्मासोः । 'श्रावणे तु स्यान्नभाः श्रावणिकश्च सः' इत्यमरः । 'स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः' इत्यमरः । अतिसंपतन्तः वर्षन्तः ॥

स्वयोनिभक्षध्वजसंभवानां
श्रुत्वा निनादं गिरिगह्वरस्थः ।
तमोरिविम्वप्रतिविम्वधारी
विरौति कान्ते पवनाशनाशः ॥ ९ ॥

स्वयोनीति । हे कान्ते, पवनाशनाशः पवनं वायुं अश्नातीति पवनाशः सर्पः । 'उरगः पन्नगो भोगी जिह्मगः पवनाशनः' इत्यमरः । तस्य नाशः यस्मात् एवंविधः । मयूरः । 'मयूरो वर्हिणो वर्ही नीलकण्ठो भुजंगभुक्' इत्यमरः । विरौति नदति । शव्दं करोतीत्यर्थः । किं कृत्वा स्वयोनिभक्षध्वजसंभवानां निनादं श्रुत्वा स्वस्य अग्नेः योनिः काष्ठं तत् भक्षयतीति स्वयोनिभक्षः अग्निः तस्य ध्वजः धूमः तस्मात् संभवः येषां ते स्वयोनिभक्षध्वजसंभवाः मेघाः तेषां निनादं शव्दं श्रुत्वा आकर्ण्य । 'शव्दे निनादनिनदध्वनिध्वानरवस्वनाः' इत्यमरः । तदुक्तं मेघदूते—'धूमज्योतिःसलिलमरुतां संनिपातः क्व मेघः' इति । किंभूतः मयूरः । गिरिगह्वरस्थः गिरेः पर्वतस्य गह्वरं कंदरः तत्र तिष्ठतीति स्थः । पुनः किंभूतः । तमोरिविम्वप्रतिविम्वधारी तमसः अन्धकारस्य अरिः चन्द्रः । तन्नाशकत्वात् । तमोरेः सूर्यस्य विम्वमिव विम्वं यस्य सः चन्द्र इति वा । तस्य विम्वं मण्डलं तस्य प्रतिविम्वं प्रतिमानं चन्द्रकः तत् धरतीति धारी । 'समौ चन्द्रकमेचकौ' इत्यमरः । चन्द्रकधारीत्यर्थः ॥

गोष्ठश्च कुङ्कुमवपुः प्रतिराजतेऽसौ
सह्यद्रिदैत्यभुजगोत्तमशत्रुगोपः ।

उर्वीधराभमचिरोत्थितमम्बरं खे
दृष्ट्वाहिहा प्रमुदितो हिमहाह्वयानः ॥ १० ॥

गोष्ठ इति । असौ सप्त्यद्रिदैत्यभुजगोत्तमशत्रुगोपः सप्तयोऽश्वाः । 'घोटके वीतितुरगतुरंगाश्वतुरंगमाः । वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ॥' इत्यमरः । अद्रयः पर्वताः । 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः' इत्यमरः । दैत्याः असुराः, भुजगोत्तमाः सर्पश्रेष्ठाः । 'भुजंगोऽहिर्भुजंगमः' इत्यमरः । तेषां शत्रुः इन्द्रः तं गोपयतीति सः । इन्द्रगोप इत्यर्थः । प्रतिराजते प्रतिशोभते । किंविधः । गोष्ठः गवि भूमौ तिष्ठतीति गोष्ठः । 'दिग्दृष्टिदीधितिस्वर्गवज्रवाग्वाणवारिषु । भूमौ पशौ च गोशब्दो विद्वद्भिर्दशसु स्मृतः ॥' इति हलायुधः । पुनः किंविधः । कुङ्कुमवपुः कुङ्कुमेन सदृशं वपुः अस्य सः । रक्तवर्ण इत्यर्थः । अन्यच्च हे कान्ते, अहिहा अहिः सर्पः तं हन्तीति अहिहा मयूरः । 'सर्पे वृत्रासुरेऽप्यहिः' इति वैजयन्ती । प्रनृत्यति नर्तति । किंभूतः मयूरः । हिमहाह्वयानः हिमं हन्तीति हिमहा अग्निः । तन्निवारकत्वात् । तस्य आह्वा नाम यस्य सः यानं वाहनं यस्य सः । शिखी इत्यर्थः । किं कृत्वा । अम्बरम् आकाशं तत् अस्य अस्तीति आश्रयत्वेन सः । अम्बरः मेघः तम् खे आकाशे दृष्ट्वा । मेघं विलोक्य मयूरो नर्ततीति प्रसिद्धिः । किंविधं मेघम् । उर्वीधराभम् उर्वीधरः पर्वतः तद्वत् आभा यस्य सः । पर्वतसदृशमित्यर्थः । पुनः किंविधम् । अचिरोत्थितम् । नवोत्थितमित्यर्थः ॥

कृष्णोऽम्बरः क्षरति तोयमसावजस्र-
मन्याविमौ रणगताविव चेभराजौ ।
अन्ये त्वमी द्विरदवृन्दनिभाः क्षरन्तः
प्रच्छादयन्त्यमरसिद्धविमानमार्गम् ॥ ११ ॥

कृष्णोऽम्बर इति । असौ कृष्णोऽम्बरः मेघः अजस्रं निरन्तरं तोयं क्षरति वर्षति । 'अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः' इत्यमरः । च परम् अन्यौ इमौ मेघौ रणगतौ संग्रामे वर्तमानौ इभानां गजानां राजानाविव । लक्ष्येते इति शेषः । तु पुनः अन्ये अमी द्विरदवृन्दनिभाः गजकुलसदृशाः क्षरन्तः स्रवन्तः मेघाः अमरसिद्धविमानमार्गम् अमराः देवाः । 'अमरा निर्जरा देवाः' इत्यमरः । सिद्धाः विद्याधरादयः । 'पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः' इत्यमरः । तेषां विमानानि देवयानानि तेषां मार्गं आकाशम् । प्रच्छादयन्तीत्यर्थः । 'व्योमयानं विमानोऽस्त्री' इत्यमरः । 'देवयानम्' इति क्वचित्पाठः ॥

वार्दाः खगाः क्षितिधरागमनप्रकाशा
नेमीभरासभतुरंगमतुल्यघोषाः ।
वाय्वीरिताः खमवतत्य वनं क्षरन्तो
वार्भिः क्षितिं घृतधराः परिनिर्वपन्ति ॥ १२ ॥

वार्दा इति । घृतधराः घृतं पानीयं तत् धरन्तीति मेघाः वार्भिः तोयैः । 'आपः स्त्रीभूम्नि वार्वारि' इत्यमरः । क्षितिं परिनिर्वपन्ति । निवृत्तिं नयन्तीत्यर्थः । किंविधा घृतधराः । वार्दाः वाः ददतीति वार्दाः । नीरदा इत्यर्थः । पुनः किंविधाः । खगाः खे सुरवर्त्मनि गच्छन्तीति खगाः । व्योमगाः इत्यर्थः । 'अनन्तं सुरवर्त्म खम्' इत्यमरः । किंविधाः । क्षितिधरागमनप्रकाशाः क्षितिधराः पर्वताः तेष आसमन्ताद्भागेन गमनं चलनं तत्प्रकाशाः तत्समानाः । पर्वतागमनकालसादृश्याः कृताः इत्यर्थः । पुनः किंविधाः । नेमीभरासभतुरंगमतुल्यघोषाः नेमी रथचक्रधारा, इभः हस्ती, रासभः गर्दभः । 'चक्रीवन्तस्तु बालेया रासभा गर्दभाः खराः' इत्यमरः । तुरंगमाः अश्वाः तैः तुल्यः घोषः शब्दः येषां ते तथोक्ताः । पुनः किंविधाः । वाय्वीरिताः वायुना ईरिताः क्षिप्ताः । पुनः किंविधाः । खम् आकाशम् अवतत्य व्याप्य वनं सलिलं क्षरन्तः स्रवन्तः । 'वनं सलिलकानने' इत्यमरः ॥

एषोङ्घ्रिपाशनरिपुघ्नसुतारिसाह्व-
मारुह्य तिष्ठति सुगात्रि भुजंगमारिः ।
यस्य स्वनैः प्रमुदितस्य ममाद्य बाले
तालध्वजावरजसूनुशराः पतन्ति ॥ १३ ॥

एष इति । हे सुगात्रि, भुजंगमारिः भुजंगमाः सर्पाः तेषाम् अरिः मयूरः । एष इति प्रत्यक्षेण निर्दिशति । अङ्घ्रिपाशनरिपुघ्नसुतारिसाह्वम् अङ्घ्रिपाः वृक्षाः तान् अश्नातीति अङ्घ्रिपाशनः अग्निः तस्य रिपुः पानीयं तत् हन्तीति अङ्घ्रिपाशनरिपुघ्नः आदित्यः तस्य सुतः कर्णः तस्य अरिः अर्जुनः सा आह्वा नाम यस्य तम् अर्जुनवृक्षम् आरुह्य तिष्ठति । हे बाले, यस्य स्वनैः तालध्वजावरजसूनुशराः तालध्वजः बलभद्रः तस्य अवरजः कनिष्ठसहोदरः कृष्णः तस्य सूनुः मदनः तस्य शराः बाणाः मम अद्य पतन्ति । मां व्यथां कुर्वन्तीत्यर्थः । किंभूतस्य मम । प्रमुदितस्य । हृष्टस्येत्यर्थः ॥

उस्राविषं स्थलगतोऽत्ति विसृष्टवार्भ्यो
वार्जो द्विजः स्वपितृभीरुविषप्रहीणः ।

वाताशनः खशयनः स्मरति स्थलस्य
चक्षुःश्रवा वनभयात्सुरशत्रुनामा ॥ १४ ॥

उस्राविषमिति । वार्जः द्विजः कच्छपः उस्राविषं उस्राः गावः तासां विषं गोमयम् अत्ति भक्षयति । 'अद भक्षणे' । किंविधः । विसृष्टवार्भ्यः विसृष्टानि त्यक्तानि वारीणि तेभ्यः पानीयेभ्यः स्थलगतः स्थलमुत्तीर्णः । पुनः किंविधः । स्वपितृभीरुविषप्रहीणः स्वस्य आत्मनः पिता तस्य भीरुः स्त्री माता । 'नारी भीरुर्भामिनी कामिनी च' इति हलायुधः । तस्याः विषं पानीयम् । दुग्धमित्यर्थः । तेन प्रहीणः । रहित इत्यर्थः । उत्पत्त्यनन्तरं जननीदर्शनेनैव जीवनं । न तु स्तनपानेनेत्यर्थः । तथैव वाताशनः वातं पवनं अश्नातीति वाताशनः सर्पः स्थलस्य स्मरति । स्मृतौ च कार्ये षष्ठी स्यात् । स्थलं ध्यायतीत्यर्थः । कस्मात् । वनभयात् । वनं पानीयं तस्य भयात् । किंविधः सर्पः । खशयनः खे विले शेतेऽसौ खशयनः । विलेशय इत्यर्थः । पुनः किंविधः । चक्षुःश्रवाः चक्षुषा श्रवो वेगो यस्य असौ । नेत्रवेगवानित्यर्थः । पुनः किंविधः । सुरशत्रुनामा सुरशत्रुः वृत्रासुरः तस्य नाम यस्य असौ । अहिरित्यर्थः ॥

पक्ष्यश्वमेधतुरगप्रतिमोऽष्टवर्णो
वार्दं न वह्विति समाह्वयते ह्यहिघ्नः ।
भेकस्तथैव खशयाशयवेद्यवाणिः
शब्दं करोत्यतिभृशं विषराशिमग्नः ॥ १५ ॥

पक्षीति । अहिघ्नः मयूरः वार्दं मेघं वहु इति वर्षतीति हेतोः न समाह्वयते न आकारयति । हि पूरणे । किंविधः । अश्वमेधतुरगप्रतिमः । अश्वमेधः यज्ञविशेषः तत्र तुरगः विचित्रः तेन तुल्या प्रतिमा यस्य सः । पुनः किंविधः । पक्षी पक्षाः सन्ति यस्य सः । पुनः किंविधः । अष्टवर्णः अष्टौ वर्णाः नीलपीतादयो यस्य सः । तथैव भेकः मण्डूकः । 'भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः' इत्यमरः । अतिभृशम् अत्यर्थं शब्दं करोति । किंविधः भेकः । खशयाशयवेद्यवाणिः खं विलं तत्र शेते असौ खशयः सर्पः तस्य आशयः विलं तस्मात् वेद्या वाणिः यस्य सः । पुनः किंविधः भेकः । विषराशिमग्नः विषं पानीयं तस्य राशिः निचयः तस्मिन् मग्नः । बुडित इत्यर्थः ॥

ना विष्किरावनमुपेत्य कुमातृसाह्व-
माक्रीडते मधुकलोऽङ्गनया समेतः ।
अन्यः स्वयं मणिवराभमुपेत्य गोजं
ना रामया सह पयःपतिजां वृणीते ॥ १६ ॥

ना विष्किरेति । ना पुरुषः आक्रीडते । किं कृत्वा । कुमातृपाह्वं कुत्सिता माता अम्बा सा आह्वा नाम यस्य तत् । कदम्बमित्यर्थः । विष्किराः पक्षिणः तेषां वनं काननम् उपेत्य प्राप्य । किंविधः ना । मधुकलः मधुना मद्येन कलः मधुकलः मधूदरः । विराजमान इत्यर्थः । पुनः किंविधः ना । अङ्गनया समेतः युक्तः । अन्यः ना पुरुषः स्वयं पयःपतिजां लक्ष्मीं वृणीते । दत्ते इत्यर्थः । किं कृत्वा । रामया सह स्त्रिया सह गोजं गवि भूमौ जातं गोजं तृणम् उपेत्य प्राप्य । किंविधं गोजम् । मणिवराभं मणिषु वराः श्रेष्ठाः इन्द्रनीलाः तैः तुल्या आभा यस्य तत् ॥

सूत्रं महत्क्षतजवर्णनिभं नरोऽसौ
विभ्रत्यमूनि च भिनत्ति सरोरुहाणि ।
तज्जेन चापि रजसा वनितां वयस्थो-
ऽप्यभ्युद्धरत्यवकिरत्यभिषिच्यमानः ॥ १७ ॥

सूत्रमिति । असौ नरः पुमान् सूत्रं वस्त्रम् । 'सूत्रं तन्तुव्यवस्थयोः' इति विश्वः । विभ्रति । किंभूतं सूत्रम् । महत्क्षतजवर्णनिभं महत्क्षतात् जातं महत्क्षतजं रुधिरं तस्य वर्णः रक्तता तेन निभं सदृशम् । आरक्तमित्यर्थः । अन्यच्च स एव अमूनि सरोरुहाणि पद्मानि भिनत्ति विपाटयति । अन्यच्च तज्जेन चापि रजसा तेषु पद्मेषु जातं तज्जं तेन पद्मरेणुना वनितां अभ्युद्धरति अवकिरति विक्षिपति । किंविधः । वयस्थः वयसि तारुण्ये तिष्ठतीति । युवेत्यर्थः । पुनः किंविधः । वनितया क्रीडारसेन अभिषिच्यमानः ॥

पङ्के निमग्नमिभवृन्दमदः सवारि
गर्जत्तिमिक्षयदवृन्दमिवावभाति ।
वार्यात्मनामशतचित्रतनुः सुपर्णो
योषिद्धृतः समदनः प्रतिरोरवीति ॥ १८ ॥

पङ्क इति । अदः इभवृन्दं सवारि गर्जत्तिमिक्षयदवृन्दमिव अवभाति तिमीनां मत्स्यानां क्षयः उदकं तत् ददतीति मेघाः तेषां वृन्दमिव अवभाति । किंविधं तिमिक्षयदवृन्दम् । सवारि सोदकम् । पुनः किंविधम् । गर्जत् । किंविधम् इभवृन्दम् । पङ्के निमग्नम् । अन्यच्च शोभनानि पर्णानि पत्राणि यस्य सः सुपर्णः मयूरः प्रतिरोरवीति शब्दं करोति । किंविधः सुपर्णः । वार्यात्मनामशतचित्रतनुः वारि उदकं आत्मा यस्य सः एवंभूतः चन्द्रः तस्य नाम येषां ते चन्द्रकाः तेषां शतं तेन चित्रा विचित्रा तनुः शरीरं यस्य सः । पुनः किंविधः । योषिद्धृतः स्त्रिया वशीकृतः । अत एव समदनः । सकाम इत्यर्थः ॥

विस्फोटिताम्बररवेण रिरंसुरेव
संत्रासितो हरिरनोकहनिष्कुटीषु ।
संलीयते तडितमाभिमुखीं च दृष्ट्वा
खं खान्महत्तरमसौ समनुप्रविष्टः ॥ १९ ॥

विस्फोटितेति । हरिः सिंहः अनोकहनिष्कुटीषु अनोकहाः वृक्षविशेषाः । 'अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः' इत्यमरः । तैः युक्तासु निष्कुटीषु निकुञ्जेषु रिरंसुरेव रन्तुमिच्छुरेव संलीयते लयं प्राप्नोति । किंभूतः हरिः । विस्फोटिताम्बररवेण गर्जन्मेघशब्देन संत्रासितः भीतः । असौ प्रत्यक्षः पश्चात् ततः तडितं सौदामिनीं आभिमुखीं च दृष्ट्वा खात् विलात् महत्तरं खं बिलं समनुप्रविष्टः । त्वं पश्येति समुदायार्थः ॥

एतावदुत्तमवचः सुमनाः स उक्त्वा
रन्त्वा दिनं सह तया प्रियया ह्यदीनः ।
युक्तं चतुर्भिरनडुद्भिरदीनवद्भि-
रारुह्य यानमथ संप्रययौ स्वगेहम् ॥ २० ॥

एतावदिति । अथेत्यनन्तरं सः पुमान् स्वगेहं संप्रययौ । किं कृत्वा । यानमारुह्य । किंभूतं यानम् । चतुर्भिरनडुद्भिः वृषैः युक्तम् । किंभूतैः अनडुद्भिः । अदीनवद्भिः । उन्नतैरित्यर्थः । किं कृत्वा । एतावत् उत्तमवचः उक्त्वा । पुनः किं कृत्वा । तया प्रियया सह दिनं दिनपर्यन्तं रन्त्वा क्रीडित्वा । किंविधः सः । सुमनाः सुष्ठु सुन्दरं मनः अन्तःकरणं यस्य सः । शुद्धमानस इत्यर्थः । पुन किंविधः । अदीनः । सुन्दर इत्यर्थः ॥

इति श्रीकालिदासकृतं राक्षसकाव्यं समाप्तम् ।

न क्षुभ्यति रिपुष्वेकः क्षोभते नानुजीविषु ॥
मनामपि मनो यस्य न क्षुभ्नाति महाहवे ॥ ९६ ॥
न हिनस्ति वृथा जन्तुं तृणान्यपि न हिंसति ॥
तमेव हिंसयत्येकं यस्तदाज्ञां विलङ्घते ॥ ९७ ॥
जिन्हेति नीचसङ्गत्या ह्रीच्छत्यनृतभाषणात् ॥
यो वार्ता श्रवणादेव स्वैरिणीनां हृणीयते ॥ ९८ ॥
शब्दादयो यं विषयाः सुखयन्ति नरापदम्(?)॥
सुखायते श्रिया नित्यं विद्यया यश्च सुख्याति ॥ ९९॥
देवते कन्दुकैर्नित्यं क्रीडाद्यूतैश्च दीव्यति ॥
परिदेवयते कश्चित्तस्य राष्ट्रे न दुःखितः ॥ ६०

---

(५६) क्षुभ्यति क्षोभते क्षुभ्नाति इति दिवादि—भ्वादि—क्र्यादिगण-पठितस्य रूपाणि ।

(५७) हिनस्ति तृह हिंसि हिंसायाम् रुधादिः । हिंसति हिंसि हिंसायाम् तुदादिः । हिंसयाति णिजन्तः । विलङ्घते । 'ककिवकि—'इति दण्डकपाठितो भौवादिको गत्यर्थको लघिर्भोजननिवृत्तावपि ।

(५८) जिह्रेति ह्रीलज्जायाम् जुहोत्यादिः । ह्रीच्छति ह्रीच्छलज्जायां भौवादिकः । हृणीयते हृणीङ्रोषे लज्जायां च कण्ड्वादिः ।

(५९) सुखयन्ति सुखदुःखतत्क्रियायाम् चुरादिः । सुखायति सुखं वेदयते सुखायते इति नामधातुः । सुख्याति सुखदुःखतत्क्रियायामिति कण्ड्वादिः ।

(६०) देवते देवृदेवने भौवादिकः । दीव्यति दिवुक्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । श्यन् विकरणः । परिदेवय-(६१) कूजने चुरादिः ।

सम्प्रेषु नोद्गुरयतेऽस्त्रमाहवे
मुक्ता युद्धेनोद्गुरुते स धर्मवित् ॥
आगूर्यते श्रीरपि तस्य सन्मुखे
स्फुरद्यशःश्वेतपटावगुण्ठिता ॥ ५१ ॥

अज्ञानि मित्राणि रहोपगूढे राजन्यके वेदयते स एकः ॥
सुखं सदा वेदयते स सर्वं स्वार्थं प्रजायं न निवेदयन्ति॥५२॥

बोधते धर्मविद्यां यः क्षत्रविद्यां च बोधति ॥
नित्यमध्यात्मयुक्तात्मा ब्रह्मविद्यां च बुध्यते ॥ ५३ ॥

बीभत्सते परस्त्रीभ्यो यो बध्नाति मतिं रणे ॥
बाधयन्ति न दुःखार्ताः कशान्यदरियोषितः ॥ ५४ ॥

मार्ष्टि तीर्थोदकैर्नित्यं मार्जत्यालपनैर्द्विजान् ॥
यो मार्जयति साम्राज्यश्रियश्चापलवाच्यताम् ॥ ५५ ॥

---

( ५१ ) उद्गुरयते गुर उद्यमने प्रेरयतीत्यर्थः । उद्गुरुते गुर तनादिः ।
आगूर्यते घुरी गुरी हिंसायाम् । दिवादिः ।

( ५२ ) वेदयते विद वेदनाख्याननिवासेषु इति चौरादिरात्मनेपदी उभ-
यपदित्वाद्वेदयतीत्यपि । वेदयते विद् ज्ञाने ण्यजन्तः । नि—वेदयन्ति इति
कथितप्रायमुपरि ।

( ५३ ) बोधते बुध अवगमने भ्वादिरुभयपदी । अतएव बोधतीति ।
बुध्यते दिवादिः ।

( ५४ ) बीभत्सते बध बन्धने 'दानवधे—'इत्यादिना बधेश्चित्तविकारे
सन् । बध्नाति बन्ध बन्धने क्र्यादिः । बाधयन्ति बध् बन्धने चुरादिः ।

( ५५ ) मार्ष्टि मृजू शुद्धौ अदादिः । मार्जति मृजू शुद्धौ भौवादिकः
मार्जयति मृजुशौचालंकारयोः । चौरादिकः ।

यः श्लिष्यपि प्रियां प्रेम्णा श्लेषति द्विषतां पुरम् ॥
दुःश्लेषाण्यपि कार्याणि धिया श्लेषयति क्षणात् ॥ ६१ ॥

मथ्नाति वादिनः शास्त्रे रणे मथति वैरिणः ॥
मनो मथति नारीणां रूपेणाप्रतिमेन यः ॥ ६२ ॥

कुतोपि शङ्कते नासौ सर्वेषां शक्यते तु यः ॥
शक्नोत्यशक्यमप्याजौ विजेतुं भुजविक्रमात् ॥ ६३ ॥

खेलन्ति यन्नरा नित्यं खेलयन्ति च योषितः ॥
खेलन्ति च जगत्योपि यत्प्रजा निरुपद्रवाः ॥६४॥

पिबन्ति मधु पीवन्ति पीयन्ते च प्रियाननम् ॥
यत्प्रसादादविज्ञातस्वपरोपद्रवाः प्रजाः ॥ ६५ ॥

यः प्रापयाति सर्वत्र सन्मानं धर्मराजवत् ॥

---

( ६१ ) श्लिष्यति श्लिष आलिङ्गने दैवादिकः । श्लेषति श्लिष दाहे भौवादिकः । श्लेषयति श्लिष् श्लेषणे चुरादिकः ।

( ६२ ) मथ्नाति मन्थ विलोडने क्र्यादिः । मन्थति मन्थ विलोडने भौवादिकः । मथति मथे विलोडने भौवादिक एव ।

( ६३ ) शङ्कते शकि शङ्कायाम् भ्वादिः । शक्यते शक विभाषितोमर्षते शक्नोति शक्लृ गतौ स्वादिः ।

( ६४ ) खेलन्ति वेल्ल खेल्ल इति दण्डके पठितो गत्यर्थो भौवादिकः । खेलयन्ति खेल ण्यन्तः । एला केला खेला विलासे । नामधातुरिति केचित् । खेलन्ति खेलचलने भौवादिक एव ।

( ६५ ) पिबन्ति पा पाने 'पाघ्राध्मा-इत्यादिना पिबादेशः । पीवन्ति । पीव मीव तीव स्थौल्ये भौवादिकः । पीयन्ते पीङ् पाने देवादिकः ।

( ६६ ) प्रापयति आपॢ व्याप्तौ । चुरादिः । प्रापाति आप्लृगतौ भौवादि-

प्रापति प्रस्थयं तेजः कीर्त्या व्याप्नोति रोदसिम् ॥
न लङ्घते गुरोराज्ञां न लङ्घयति यः स्थितिम् ॥
ऊर्व्याधिरतिदीप्ताग्निर्यः कदापि न लङ्घति ॥ ६७ ॥
खिद्यते यो न भृत्येषु याचकेषु न खिन्दति ॥
खिन्ते तेष्वेव ये द्रव्यं दीयमानं न गृह्नते(?) ॥ ६८ ॥
अज्ञापयति भृत्यार्थे यज्ज्ञेयं ज्ञपयत्यजान् ॥
भृताश्च भक्तिनम्राभिर्वाग्भिर्विज्ञपयन्ति यम् ॥ ६९ ॥
निष्कलन्ते मुखाद्यस्य नाश्लीलपरुषा गिरः ॥
सः श्रियं कलयत्यैन्द्रीमुत्कालयति यद्यशः ॥ ७० ॥
सर्वो गर्वति विद्याभिर्धनैर्गर्वायतेऽपरः ॥
सर्वविद्यश्च सम्राड्ड (जो) न स गर्वयते प्रभुः ॥७१॥

---

कः । व्याप्नोति आप्लृ व्याप्तौ स्वादिगणपठितः ।

(६७) लङ्घते आघि राघि लघि गत्याक्षेपे लघिर्भोजननिवृत्तावपि वा भ्वादिः लङ्घयति स एव चुरादिः अघिलघिमहिचेति पठितः । लङ्घति स परस्मैपदी इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् ।

(६८) खिद्यते खिद दैन्ये दिवादिः । खिन्दति खिद परिघाते तुदादिर्मुचादौ पठितः । खिन्ते खिद दैन्ये रुधादिः । गृह्नते रुधादिरेव (?) ।

(६९) आज्ञापयति ज्ञा अवबोधने क्र्यादिः । 'मारण तोषण निशामनेषु ज्ञा' इति घटादिपठितनियमेनात्र न मित्त्वम् । ज्ञपयति ज्ञपमिच्चेति चुरादौ अयं ज्ञाने ज्ञापने च वर्तते 'मितां ह्रस्वः' इति ह्रस्वः । मारणतोषणनिशामनेषु ज्ञा इति घटादिः । ज्ञानियोगे ज्ञापयति णिजन्तः ।

(७०) निष्कलन्ते कलशब्दे भौवादिकः । कलयते कल गतौ संख्याने च चुरादिरदन्तः । उत्कालयति कलविक्षेपे चुरादिः ।

(७१) गर्वति कर्व खर्व गर्व दर्पे भौवादिकः । गर्वायते गर्व माने चुरादिरदन्तः । गर्वयते भौवादिकस्य ण्यन्तस्य रूपम् ।

क्रन्दन्ति कांदिशीभूता दिगन्ते यस्य शत्रवः ॥
क्रन्दत्यश्रुभरैर्वाग्भिः क्रन्दयन्ति रिपुस्त्रियः ॥७२॥
तृणत्ति शात्रवान्युद्धे तच्छिरोभिस्तृणोति गाम् ॥
तृणाति त्रिदशां वासं यः कुन्देन्दुत्ति(?)भिर्गुणैः॥७३॥
यः सदाद्रियते धर्मं दृणाति च रणे रिपून् ॥
दरन्ति दिग्दिवीशाश्च यस्य दिग्विजयोद्यमे ॥७४॥
यतते धर्म एवासौ यातयत्यहितं विशाम् ॥
निर्यातयति वैरं च नरेन्द्रेषु क्रमागतम् ॥७५॥
शीशांसते खड्गलतां निशिनोत्यसिचन्द्रिकाम् ॥
शाणयत्याशु गात्राणि यत्सैन्यं समरोद्धुरम् ॥ ७६॥
न सीदति क्वचित्कार्यें सर्वत्रासीदति श्रियम् ॥
आसादयति विद्यानां सर्वासां परमाप्यसौ ॥७७॥

---

(७२) क्रन्दन्ति कदिक्रदिक्लदि नामाह्वानरोदनयोः। भौवादिकः। क्रन्दति स एव चुरादिः। क्रन्दयन्ति। कदि क्रदि रोदने चौरादिकः।

(७३) तृणत्ति उतृदिरहिंसानादरयोः रुधादिर्नवमः। तृणोति तृणु अदने तनादौ षष्ठः। गां पृथ्वीं। तृणोति भुंक्ते उपभुंक्ते इत्यर्थः। तृणाति क्र्यादिः(?) स्तृञ् इति क्र्यादौ सादिरेको विद्यते न हि तत्र पाठभेदोपि।

(७४) आद्रियते दृङ् आदरे। दृणाति दृ विदारणे क्र्यादिः। दरन्ति दृभये। भौवादिकः।

(७५) यतते यती प्रयत्ने भौवादिकः। यातयति यत निकारोपस्कारयोः। चुरादिः। निर्यातयति नाशयतीत्यर्थः स एव णिजन्तः।

(७६) शीशांसते शान तेजने 'मान्बधदान्शान्-' इत्यादिना तेजनार्थे सन्। नि-शिनोति शिञ् निशाने स्वादौ तृतीयः। शाणयति शाण तेजने चुरादिः।

(७७) सीदति षद्लृ विशरणगत्यवसादनेषु 'पाघ्राध्मा-' इत्यादिना सीदादेशः। सर्वे अर्थान्तरेण ज्ञेयाः। आसादयति आङ्ः षद् पद्यर्थे चौरादिकः। पुस्तके तु आसीदतीति (?) परमाप्यसी (?)

रटन्ति हाटकं यस्मात्प्राप्य विप्राः परस्परम् ॥
रटयन्ति च रङ्गाणि भूमिं च रटयन्ति ते ॥७८॥

श्रुत्या धर्मं मिमीते यः किंचित्स्मृत्यापि मायते ॥
न माति मानिनो यस्य यशस्त्रिभुवने हरेः ॥ ७९॥

यस्य श्रीर्वर्धते नित्यं योऽर्थैर्वर्धयति द्विजान् ॥
वर्धयत्यरिवीराणां क्रुद्धो मूर्धानमाहवे ॥८०॥

विष्कम्भते प्रजारिष्टं विष्कभ्नाति यमाद्भयम् ॥
विष्कभ्नोति परोद्योगं तपःशौर्यबलेन यः ॥ ८१ ॥

धनेन स्तम्भते सर्वस्तभ्नात्यन्यश्च विद्यया ॥
विद्याधनसमृद्धोऽपि यो न स्तभ्नोति सज्जनः ॥ ८२ ॥

---

( ७८ ) रटन्ति रट परिभाषणे भौवादिकः । रटयन्ति चुरादिर्ण्यन्तश्च । हाटकं सुवर्णं रङ्गाणि सभाः ।

( ७९ ) मिमीते माङ् माने जुहोत्यादिः ‘ ईहल्यघोः ’ इति आत ईत्वम् । मीयते । मायते माङ् माने दैवादिकः । पुस्तके तु मीयते इति पाठः प्रकृतार्थानुपयोगी । माति मामाने अकर्मकः ‘ तनौ ममुस्तत्र न कैटभाद्विषः ’ इतिमाघः । उपसर्गवशेनार्थान्तरे सकर्मकः ‘ उदरं परिमाति मुष्टिना ’ ( सि० कौ० ) ।

( ८० ) वर्धते वृधु वृद्धौ भौवादिकः । वर्धयति णिजन्तः । वर्धयति चुरादिश्च ।

( ८१ ) विष्कम्भते । ष्टभिस्कभि प्रतिबन्धे । भौवादिकः । विष्कभ्नाति । विष्कभ्नोति । ‘ स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ’ इति सौत्रः । स्कम्भुधातुः रोधनार्थः । “ वेः स्कभ्नातेर्नित्य ” मिति षत्वम् ।

( ८२ स्तम्भते ष्टभि स्कभि प्रतिबन्धे । स्तभ्नाति ‘ स्तम्भुस्तुम्भु– ’ इति सूत्रोक्तो रोधनार्थोऽयम् । तेनैव श्नुः श्ना च ।

अर्थिनामीप्सितप्राप्तौ कल्पते कल्पवृक्षवत् ॥
न कल्पयति मिथ्यार्थाञ्छिरः कल्पयति द्विषाम् ॥८३॥
दीनेषु दयते नित्यं योऽर्थिभ्यो दयते धनम् ॥
दीयन्ते प्रत्यहं यस्य दुरितानि तपोबलैः ॥ ८४ ॥
शोकेन क्षीवते सर्वः क्षीवते हर्षहर्षितः ॥
उभाभ्यामपि संस्पृष्टो यस्तु नातीव तीरति(?) ॥८५॥
न रोषयति तस्मै स यो न तुल्यो न चाधिकः ॥
यस्मै कुप्यति तस्यासौ कुलमेवाभिरोषति ॥ ८६ ॥
न धृष्णोति गुरोरग्रे न धर्षति निजाः प्रजाः ॥
तमेव धर्षयत्येष यस्तासु प्रतिकूलति ॥ ८७ ॥
चूर्यते चौर्यवृत्तान्यश्चूर्णयत्यरिमण्डलम् ॥
अवचूर्णयति व्योम यत्सेनाप्रभवं रजः ॥ ८८ ॥

---

( ८३ ) कल्पते कृपू सामर्थ्ये । 'कृपोरोल' इ[illegible] ऋकारसदृशत्वम् । कल्पयति । कल्पयति ल्हप व्यक्तायां वाचि क्लृप इत्येके चुरादिः । कृप छेदनेचुरादिः सारकृप दौर्बल्ये इत्यपि चुरादिः ।

( ८४ ) दयदानगतिहिंसादानेषु भौवादिकः । दयते स एव दानार्थकः । दीयते दीङ् क्षये दैवादिकः ।

( ८५ ) क्षीवते क्षीवृ भौवादिकः । क्षीवृ मदे भौवादिकः । क्षिवु क्षेवु निरसने इति एकश्रुरादिरपि विद्यते । तीरति पारतीरकर्मसमाप्तौ ।

( ८६ ) रोषयति रुष रोषे चुरादिः । कुप्यति कुपक्रोधे दैवादिकः । अभि—रोषति रुष रोषे भौवादिकः । रुष रिष हिंसायामिति दिवादावपि तस्य रुष्यतीति ।

( ८७ ) धृष्णोति ञिधृषा प्रागल्भ्ये स्वादिः । धर्षति । धृषु अलीके भौवादिकः । धर्षयति ण्यजन्तः ।

( ८८ ) चूर्यते चूरी दाहे दिवादिः । चूर्णयति चूर्ण चूर्णने चुरादिः । अवचूर्णयति व्याप्नोति ।

नोत्कण्ठते परद्रव्यं नोत्कण्ठाति परस्त्रियम् ॥
यस्योत्कण्ठयाति स्वास्थ्यं धर्म एव मनः सदा ॥ ८९ ॥
यो मार्गयति सन्मार्गं मार्गति क्षेममात्मनः ॥
यस्मिन् मृगयते नित्यं यायजूको जनो धनम् ॥ ९० ॥
विशिनष्टि स्मरं मूर्त्या श्रिया शेषं विशेषति ॥
विशेषयति यो वाग्मी वाचा वाचस्पतेर्वचः ॥९१॥
वितानयति यः कीर्तिं वितनत्यमलं यशः ॥
वितनोति रिपुस्त्रीणां हृदये मदनव्यथाम् ॥ ९२ ॥
क्लेशते न मृषा वाक्यं क्लिश्यते न च निष्फलम् ॥
नेन्द्रियाणि विरुद्धेषु क्लिश्नाति विषयेषु च ॥९३॥
हितं मितं च यो वक्ति न वचत्यप्रियं वचः ॥
नानादेशसमुत्पन्नां वाचयत्यखिलां लिपिम् ॥९४॥

---

( ८९ ) उत्कण्ठते । मठि कठि शोके शोक इह आध्यानम् । उत्कण्ठाति कटि शोके चुरादौ पठितः । इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् । उत्कण्ठयतीति स एव ।

( ९० ) मार्गयाति मार्ग अन्वेषणे चुरादिः अदन्तः । मार्गति भौवादिकः । मृग अन्वेषणे मृगयते । मृगयतीति कण्ड्वादिः ।

( ९१ ) वि–शिनष्टि । शिष्लृ विशेषणे । रुधादिगणपठितः । विशेषति कषखषशिष भ्वादौ पठितः । विशेषयति स एव चौरादिकः ।

( ९२ ) वि–तानयति तनु विस्तारे चौरादिकः । वि–तनति तनु विस्तारे भौवादिकः । वितनोति तनु विस्तारे "तनादिकृञ्भ्य उः ।

( ९३ ) क्लेशते ( उच्चारयति ) भौवादिकः । क्लिश उपतापे क्लिश्यते दिवादिः क्लिश्नाति क्लिशू विबाधने क्र्यादिः ।

( ९४ ) वक्ति वच् परिभाषणे आदादिकः भ्वादिर्वचति अयमेव ण्यन्तः ।

यस्य बर्हति नित्यं श्रीर्दानशक्तिश्च बृंहति ॥
बृहति सिंहवद्यस्य द्विपदुष्टारिवारणात् ॥ ९५ ॥
तिपन्ति यस्य मातङ्गास्तिप्यन्ति च तुरंगमाः ॥
तेपयन्ति मनुष्याश्च युद्धे निम्नोन्नतां भुवं ॥ ९६ ॥
तपसा भर्जते पापं तेजसारींश्च भृज्जति ॥
कर्मबीजानि सर्वाणि योगाभ्यासाद्भृणोति यः ॥ ९७ ॥
रिक्ते रिपुर्यदाक्रान्तो धनैस्तन्त्रैश्च रेचति ॥
रेचयन्ति च तन्नारीलोचनान्यश्रुवारिभिः ॥९८॥
सत्यं वदति सर्वत्र सर्वस्य वदते हितम् ॥
यन्न सत्यं न च हितं न वादयति तद्वचः ॥९९॥
सर्वोऽप्यर्जयति द्रव्यमात्मनः प्रीतिहेतवे ॥
अर्जते शाश्वतीं कीर्त्तिं यश्चार्जति जयं स्थिरम् ॥१००॥

---

(९५) बर्हति। बर्ह बल्ह प्राधान्ये भौवादिकः। बृंहति बृहू बृहि वृद्धौ तुदादिः। बृहति बृह उद्यमने तुदादिः।

(९६) तिपन्ति तिपक्षेपे तुदादिः। तिप्यन्ति। दिवादिः। तेपयन्ति स एव चुरादिः।

(९७) भर्जते भृजुभर्जने भौवादिकः। भृज्जति भ्रस्जपाके तुदादिः 'ग्रहिज्या०' इति संप्रसारणम्। भृणोति भृञ् भर्त्सने स्वादिः।

(९८) रिङ्क्ते। रिचिर विरेचने रुधादिः। स्वरितेदयम् तेन रिण-क्तीत्यपि। रेचति रिच वियोजनसंपर्चनयोःभौवादिकः। रेचयन्ति ण्य-न्तस्य रूपम्।

(९९) वदति वद व्यक्तायां भौवादिकः। वदते स एवात्मनेपदी। वादयति चुरादिर्ण्यन्तोयम्।

(१००) अर्जयति अर्ज प्रतियत्ने अयमर्थान्तरेपि चुरादिः। अर्जते। ऋज गतिस्थानार्जनोपार्जनेषु। भौवादिक आत्मनेपदी। अर्जति अर्ज षर्ज अर्जने भौवादिकः।

यस्य संग्रामशौण्डत्वं शालते बाहुशालिनः ॥
शलन्ति यद्गणा दिक्षु शलन्तेवं सुरालयम् ॥१०१॥
भक्षयन्त्यस्थिभक्षं ते मांसं भक्षति शोणितम् ॥
यत्खण्डं खण्डिताङ्गानां शत्रूणां कौणपा रणे ॥१०२॥
यश्च लालयते बन्धून् लालयन्त्यखिलाः प्रजाः
उल्ललन्ति यमालोका ललनानां मनोरथाः ॥१०३॥
मूढति द्विषतां शौर्यं तेषां दर्पं च मोटति ॥
यो मोटयति राष्ट्रेषु तत्कृतारामगण्डपान् १०४
मृधे मृणाति शत्रूणामश्वान् मृणति वारणान् ॥
शत्रुबाणैः पुरस्तस्य नैकोपि म्रियते पुरः ॥१०५॥
त्रस्यन्ति रिपवो यस्मात्त्रसन्ति परदारगाः ॥
यत्त्रासयति निःशेषान्भूयोनन्तरभूपतीन् ॥१०६॥

---

(१०१) शालते शाल श्लाघायाम् । आत्मनेपदी । शलन्ति शलहुलपत्लृ गतौ । शलन्ते शलू चलनसंवरणयोः । भ्वादयः ।

(१०२) भक्षयन्ति भक्ष अदने चुरादिः । भक्षति भक्षभक्षणे भ्वादिरुभयपदी ।

(१०३) लालयते लल ईप्सायां चुरादिः । लालयन्ति लल् उपसेवायां चुरादिः । उल्ललन्ति लल संलासे भ्वादिः ।

(१०४) मूढति मूढआक्षेपप्रमर्दनयोः । भौवादिकः । मुट प्रमर्दने भौवादिकः । मोटयति स एव चुरादिः । नाशयतीत्यर्थः ।

(१०५) मृणाति मृ हिंसायाम् क्र्यादिः 'प्वादीनां ह्रस्वः'। मृणति मृण हिंसायां तुदादिः । म्रियते मृङ् प्राणत्यागे तुदादिः ;

(१०६) त्रस्यन्ति त्रसी उद्वेगे दिवादिः । 'वा भ्राश–' इति श्यन् वा । तेन त्रसन्ति । त्रासयति । त्रस वारणे चुरादिः ।

लुट्यत्यट्टालिकं दुर्गे कपाटानि च लोटते ॥
रिपूणां लोटयत्याजौ कुञ्जराणां घटांश्च यः ॥१०७॥
न तथा गर्हते श्वानः सृगालं च न गर्हति ॥
गर्हयत्येकमेवार्थन्यासिने स नवं यथा ॥ १०८ ॥
द्राघते वपुरत्यर्थं द्राहते च निशागमे ॥
द्राखति तृणतापन्नं यद्वियोगे मृगीदृशाम् ॥१०९॥
क्षिणाति दुरितं दृष्ट्वा क्षिणोत्यर्थं च दुःखितम् ॥
भृत्यानां नित्यमज्ञानं यः क्षिणोति सदुक्तिभिः ॥११०॥
हिण्डन्ते ये मृषा रात्रौ परस्त्रीषु हिडन्ति ये ॥
हेडन्ते नीतिसम्पन्नो बान्धवानपि तानसौ ॥१११॥
क्षयति प्रत्यहं पापं क्षायति द्विषतां कुलम् ॥
यशः क्षिपति रोदस्योर्यस्य धर्मरतात्मनः ॥११२॥

---

(१०७) लुट्यति लुट विलोडने दिवादिः। लोटते लुट् प्रतिघाते भौवादिकः। लोटयति पट पुट लुट इति दण्डकपठितश्चुरादौ विनिन्दते। लुट्संश्लेषणे इति तुदादिरप्येकः।

(१०८) गर्हते गर्ह निन्दायाम् भ्वादिः। गर्ह विनिन्दने परस्मैपदी। गर्हयति स एव णिजन्तः।

(१०९) द्राघते द्राघृ प्रयत्ने भौवादिकः। द्राहते द्राहृ निद्राक्षये भौवादिकः। द्राखृध्राखृ शोषणालमर्थयोः भौवादिकः।

(११०) क्षिणाति क्षीष् हिंसायाम् क्र्यादिः। क्षिणोति क्षिणु हिंसायां तनादिः। क्षिणोति क्षिञ् क्षये स्वादिः।

(१११) हिण्डन्ते हिडि गत्यनादरयोः। भौवादिकः। हिडन्ति हिल भावकरणे डलयोः सावर्ण्याद् हिडन्ति। हेडते हेडृ अनादरे भौवादिकः। आत्मनेपदी।

(११२) क्षयति क्षिक्षये अकर्मकः अन्तर्भावितण्यर्थस्तु सकर्मकः। भौवादिकः। क्षायति क्षै जै षै क्षये भौवादिकः। क्षिपति क्षिप प्रेरणे तुदादिः चुरादिः।

दण्डं जोडयति द्विक्षु वधं तेषां च जोडति ॥
देवतातिथिपित्रर्थं नित्यमर्थं जुडत्यसौ ॥११३॥
अन्नं राघ्नोति विप्रार्थं व्यञ्जनानि च रध्यति ॥
यत्प्रसादाज्जनः सर्वः सततं राध्यति श्रिया ॥११४॥
यो मूषति परद्रव्यं तस्य मुष्णाति यः शिरः ॥
मुष्यत्यपहृतार्थानां दुःखं धनसमर्पणात् ॥११५॥
भक्त्यार्चयति यो विप्रान् गुरून् देवांस्तथार्चति ॥
अर्चन्ते चरणौ यस्य मौलिरत्नांशुभिर्नृपाः ॥११६॥
बहु व्ययति द्रव्यं तदर्थं च व्ययत्यरीन् ॥
व्याययत्ययशोबिम्बं त्रैलोक्यादर्शमण्डले ॥११७॥
अर्दति द्विषतां दर्पानर्दते दुरितोदयम् ॥
यश्चार्दयति दारिद्र्यं दीनानां द्रविणं दिशन् ॥ ११८ ॥

---

( ११३ ) जोडयति जुड प्रेरणे (१३१) जुड चूर्णने जोडति जुड प्रतर्दने भौवादिकः । जुडति जुड गतौ तौदादिकः । अयमेव तवर्गपञ्चमान्त इत्येके मरुतो जुनन्ति, ।

( ११४ ) राघ्नोति राध साध संसिद्धौ । स्वादिः । रध्यति रध हिंसायां च चकारात्सिद्धावपि । राध्यति राध साध संसिद्धौ दिवादिः ।

( ११५ ) मूषति मूष स्तेये भौवादिकः । मुष्णाति मुष स्तेये क्र्यादिः । मुष्यति मुष नाशने दिवादिः ।

( ११६ ) अर्चयति अर्च पूजायाम् चुरादिगणपठितः । अर्च पूजायां भौवादिकः । अर्चन्ते स एवात्मनेपदी ।

( ११७ ) व्ययति । व्ययवित्तसमुत्सर्गे चुरादौ अदन्तः । व्ययति व्यय गतौ भौवादिकः । व्याययति हलन्तश्चुरादिः अर्थः स एव । अय गतौ तिजन्तो वा ।

( ११८ ) अर्द गतौ याचने च भौवादिकः । अर्दते अर्द हिंसायां आत्मनेपदी भौवादिकः । अर्दयति पूर्वोक्त एव णिजन्तः । नाशयतीत्यर्थः । दिशन् ददन् दिश अतिसर्जने अतिसर्जनं दानम् । तुदादिः ।

स्वदते विविधाहारैः स्वादते च गिरां रसम् ॥
आस्वादयति सर्वेषां विषयाणां सुखानि यः ॥ ११९ ॥
यत्र विच्छत्यरिव्यूहं यत्र विच्छायति स्वयम् ॥
विच्छाययति तत्रासौ भूपतीनां मुखश्रियम् ॥ १२० ॥
न बिभेति नरेन्द्रेभ्यो देवेभ्यश्च न भेषति ॥
एकस्माद्भेषते धर्मात्तस्मात्कुर्यादतिक्रमम् ॥ १२१ ॥
यः कृणत्ति गुणग्रामं कृन्तत्यरिशिरांसि यः ॥
कीर्तयन्ति च गोष्ठीषु यद्गुणानमराङ्गनाः ॥ १२२ ॥
न्यञ्चति प्रत्यहं मोहो यस्य नाचन्ति चारयः ॥
अञ्चयन्ति सदा यं च गुणाः सर्वातिशायिनः ॥१२३॥
न कुथ्नाति च दुःखार्तः सीतार्तश्च न कुन्थति ॥
तस्य राष्ट्रे धनाढ्यो वा मृतः कोपि न कुथ्यति १२४॥

---

( ११९ ) स्वदते स्वद आस्वादने भौवादिकः। स्वादते स्वाद आस्वादने अयमपि तथा । अयं चुरादिगणपठित आङ्पूर्वः आस्वादयति इति ।

( १२० ) विच्छति विच्छ गतौ तुदादिः । विच्छायति विच्छ गतौ 'गुपूधूप विच्छ-' इत्यनेनायप्रत्ययः ततो धातुसंज्ञायां लकाराः । विच्छाययति इति नाम धातुः गततेजः करोतीत्यर्थः । चुरादावपि घटपुटेति दण्डकपठित एको विच्छधातुः ।

( १२१ ) बिभेति ञिभी भये जुहोत्यादिः । भेषति भेषते भेषृ भये भौवादिरुभयपदी ।

१२२ ) कृणत्ति कृती वेष्टने रुधादिः । कृन्तति कृती छेदने तुदादौ मुचादिः । कीर्तयन्ति कृती संशब्दने चुरादिः ।

१२३ ) न्यञ्चति अञ्चु गतिपूजनयोः भौवादिकः । नाचन्ति अचु विशेषणे भ्वादिः । अञ्चयन्ति । अञ्चु व्यक्त गतौ च चकारान्मन्दशब्दार्थे चुरादिः ।

( १२४ ) कुथ्नाति कुथ क्लेशे क्र्यादिः । कुन्थति कुथि पुथि हिंसासंक्लेशनयोः । भ्वादिः । कुथ्यति कुथ पूतीभावे दिवादिः ।

विचारयति यो धर्मं विद्वद्भिर्ब्राह्मणैः सह ॥
विचरत्यस्य लोके च शरच्चन्द्रोज्ज्वलं यशः ॥१२५॥
अविद्यानिद्रयाक्रान्तो जगत्येकः स चेतति ॥
धिया चेतयते सर्वं परस्य हृदि संस्थितम् ॥ १२६ ॥
यो भुजाभ्यां भुवो भारं भरते भरतोपमः ॥
बिभर्ति च यशोराशिं भूभर्तेर्यस्य भूरपि ॥ १२७ ॥
यस्य रोषारुणा दृष्टिर्यत्रैव तस्य शत्रवे ॥
पाशपाणिस्तरस्तस्मिन् यमदूतोऽपि धावति ॥ १२८ ॥
शास्त्रेण स्तोभते प्रायो लघुप्रकृतिको नरः ॥
निष्टभ्नाति महात्मासौ न नीतेरच्युतस्तु ताः ॥ १२९॥
हते भर्त्तरि दुःखार्त्ता क्लिन्दन्ति यदरिस्त्रियः ॥
अजस्रैरश्रुभिस्तासां क्लिद्यन्ति नयनानि च ॥ १३० ॥

---

( १२५ ) विचारयति चर संशये चुरादिः । विचरति । चर छम्म गतौ भौवादिकः ।

( १२६ ) चेतति चिती संज्ञाने भौवादिकः । चेतयते चित संवेदने चौरादिकः ।

( १२७ ) भरते डुभृञ् धारणपोषणयोः भौवादिकः । बिभर्ति डुभृञ् धारणपोषणयोः । जुहोत्यादिः ।

( १२८ ) धावते धावु गति शुद्ध्योः । धावति । सृगतौ । 'पाघ्राध्मा' इति शिति धौरादेशः ।

( १२९ ) स्तोभते ष्टुभु स्तम्भे इति भौवादिकः । निष्टभ्नाति । स्तन्भु सौत्रो धातुः रोधनार्थः । 'स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुन्भ्यः श्नुश्च' । अनेन स्तभ्नोतीत्यपि ।

( १३० ) क्लिन्दन्ति क्लिदि परिदेवने भौवादिकः । क्लिद्यन्ति क्लिदू आर्द्रीभावे दिवादिगणपठितः ।

प्राणिङ्क्ते दाक्षिणीयानां विप्राणां चरणौ च यः ॥
यत्पादौ मौलिरत्नांशुजालैर्नेनेक्ति राजकम् ॥ १३१ ॥
न संधयति केनापि यः सर्वविजयी नृपः ॥
संदधाति धनुष्येव योऽन्तकाले च सायकम् ॥ १३२ ॥
मौर्व्या यो द्विषतां दर्पं भञ्जयत्याञ्जनेयवत् ॥
भनक्ति कामिनीनां च दृश्यो मानमनङ्गवत् ॥ १३३ ॥
यो वेवेक्ति च वेदान्तं शास्त्राभ्यासेन सर्वदा ॥
विविनक्ति पृथग्भूतं भूतेषु च धनं च यः ॥ १३४ ॥
आप्यायन्ते यतः प्राप्यायत्तभागं दिवौकसः ॥
तद्दत्तधनसम्पत्तिराप्यायन्ते च यत्प्रजाः ॥ १३५ ॥
यो हि व्यायच्छते नित्यमसौ किल न मेदते ॥
इति व्यायामशीलोऽसौ महाकायो न मेद्यति ॥ १३६ ॥

---

(१३१) प्राणिङ्क्ते णिजिशुद्धौ अदादिकः । नेनेक्ति णिजिर् शौच-पो-षणयोः जुहोत्यादिः । ‘णिजां त्रयाणां गुणः श्लौ’ इत्यभ्यासस्य गुणः ।

(१३२) संधयति धेट् पाने भौवादिकः संपूर्वः । उपसर्गवशेनार्थान्तरम् । संदधाति डुधाञ् धारणपोषणयोः जुहोत्यादिः ।

(१३३) भञ्जयति । ‘पट पुट लुट तुजि मिजि पिजि लुजि भजि-’ इति पठितः चौरादिको भाषार्थको भजिधातुः । भनक्ति भञ्जो आमर्दने रुधादिः ।

(१३४) वेवेक्ति विजिरपृथग्भावे जुहोत्यादिः । ‘णिजां त्रयाणाम्’ इत्यनेनैव गुणः । विविनक्ति विचिरपृथग्भावे इति रुधादिः ।

(१३५) आप्यायन्ते स्फायी ओप्यायी वृद्धौ भौवादिकः । आप्याय-न्ते स एव वा (?) ।

(१३६) व्यायच्छते । यम उपरमे । ‘इषगमी-’तिछः । मेदते ञि-मिदा स्नेहने भौवादिकः । मेद्यति तदर्थक एव दैवादिकः ।

युद्धे कृणाति शत्रूणां कन्धरान् बाणवृष्टिभिः ॥
दत्त्वा बाणप्रहारं च तेषां क्षिणाति यः श्रियम्॥१३७॥
घृतार्चित इवार्चिष्मान् चर्चते यो रणाङ्गणे ॥
चर्चयत्यन्नुवाणश्च चर्चते च परैः सह ॥ १३८ ॥
धावत्याधोरणाक्रान्ते विनीता तस्य वारणाः ॥
जात्या धुर्याश्च धूर्यन्ते सादिभिः साधुसादिताः॥१३९॥
यस्मिन्नभ्युदिते राज्ञि संकोचति मतः क्षितौ ॥
संकुचत्यरिनारीणां मुखपङ्केरुहद्युतिः॥ १४० ॥
नावद्यं घोषते यस्य द्वारे कश्चिद्भयद्रुतः ॥
घोषयन्ति परं सर्वे दीर्घमायुः सदार्चिताः ॥ १४१
उड्डीयन्ते शरा यस्य कोटिशः समराङ्गणे ॥
भग्नानामरिसैन्यानामुद्दूयन्ते रजांसि च ॥ १४२ ॥

---

( १३७ ) कृणाति । कृञ् हिंसायाम् । अत्र क्षिणाति इत्यनेनैव पाठेन भाव्यम् । क्षीष् हिंसायां क्र्यादिषु प्वादिः । येषां मते ल्वाद्यन्ता एव प्वादयस्तेषां मते क्षीणातीति ।

( १३८ ) चर्चते । चर्च पूजायाम् । भौवादिकः । चर्चयति चुरादिः ।

( १३९ ) धावति धावु गतिशुद्ध्योः । धूर्यन्ते धूरी गूरी हिंसागत्योः दिवादिः ।

( १४० ) संकोचति कुच शब्देतारे । भौवादिकः । संकुचति कुच संकोचने तौदादिकः ।

( १४१ ) घोषते घुषिरविशब्दने विशब्दनं प्रतिज्ञानं भौवादिकः । घोषयन्ति अयमेव चुरादिः घुष् घोषणे इति ।

( १४२ ) उड्डीयन्ते डीङ् विहायसा गतौ दिवादिः उत्पूर्वः । उद्दूयन्ते दूङ् परितापपरिचरणयोः दिवादिः ।

यो लिङ्गेनानुमयति कृत्स्नान् विविधचेष्टितान् ॥
न चानुमाययत्यन्यं तस्य यच्चेतसि स्थितम् ॥ १४३ ॥
मृद्नाति विद्विषां दर्पं यो भुजाभ्यां भुवः पतिः ॥
मृदन्ते चरणौ यस्य विद्विषः शरणागताः ॥ १४४ ॥
मिलन्ति प्रत्यहं यस्य वाजिवारणसम्पदः ॥
मीलन्ति रिपुनारीणां मुखपद्मवनानि च ॥ १४५ ॥
यस्य नाघोटते दन्डो घट्टनार्थः कुतश्चन ॥
व्याघुटन्ति विपक्षाश्च ये सन्मुखमुपागताः ॥ १४६ ॥
यो वाग्मी वाग्मिनां मध्ये वाचमुच्चैः प्रपञ्चते ॥
प्रपञ्चयति यत्कीर्तिं दिङ्मुखेषु महाजनाः ॥ १४७ ॥
यस्य न्यायार्जितैर्वित्तैः पूज्यमाना दिनेदिने ॥
तुष्यन्ति ब्राह्मणा नित्यं तुषन्ति कुलदेवताः ॥ १४८ ॥
मनो नोद्विजते यस्य ददतोर्थमहर्निशम् ॥
उद्विनक्ति तु संसारादसारादात्मवेदिनः ॥ १४९ ॥

---

(१४३) अनुमयति । डुमिञ् प्रक्षेपणे भौवादिकः । अनुमाययति मा माने चुरादिपठितः ।

(१४४) मृद्नाति मृद क्षोदे क्र्यादिः । मृदन्ते मृद् तुदादिः (?)

(१४५) मिलन्ति मिल् संगमे । मिल श्लेषणे तुदादिः । मीलन्मील निमेषणे । निमेषणं संकोचः । भौवादिकः ।

(१४६) घोटते रुट् घुट् परिवर्तने भौवादिकः । घुटन्ति घुट्प्रतिघाते ।

(१४७) प्र–पञ्चते पचि व्यक्तीकरणे भौवादिकः । प्र–पञ्चयति पचि विस्तारवचनयोः चुरादिः ।

(१४८) तुष्यन्ति तुष् तुष्टौ दिवादिः । तुषन्ति तुदादिकः ।

(१४९) उद्विजते ओविजी भयचलनयोः तुदादिः । विनक्ति विचिर्पृथग्भावे रुधादिः । वेवेक्ति विविनक्ति इति पूर्वमुक्तमेव ।

नेदते न जनं कश्चित्स्वामी यः समदर्शनः ॥
न निन्दति परीवादं परस्य निरुणाति यः ॥ १५० ॥
पितॄन् पूरयति श्राद्धे हव्यैः कव्यैश्च यः सदा ॥
पूर्यन्ते पितरस्तं च प्रासादैरुदितोदितैः ॥ १५१ ॥
प्रकाशते यथा व्योम्नि चन्द्रः संपूर्णमण्डलः ॥
प्रकाश्यते तथा भूमौ स प्रजानयनोत्सवः ॥ १५२ ॥
न प्रगल्भायते मिथ्याकथनैर्यः कदाचन ॥
आजौ प्रगल्भते दोर्भ्यां रिपोर्विघटयन् घटाः ॥१५३॥
यज्ञवाटे द्विजातिभ्यो दातुं तुप्यति यो धनम् ॥
श्वेतदेवकुलव्याजाद्यशस्तूपयतीव यः ॥ १५४ ॥
विनापराधमारण्यान् यः खेटति मृगानपि ॥
खेटयत्यरिवीरांश्च पापार्द्धरसिकान् बहून् ॥ १५५ ॥

---

( १५० ) नेदति णिद णेद कुत्सासंनिकर्षयोः भौवादिक उभयपदी । निन्दति णिदि कुत्सायाम् । भौवादिक एव ।

( १५१ ) पूरयति पूरी आप्यायने चुरादिगणपठितः । पूर्यन्ते पूरी आप्यायने दिवादिगणपठितः ।

( १५२ ) प्र–काशते काशृ दीप्तौ भौवादिकः । प्र–काश्यते । काशृदीप्तौ दिवादिगणपठितः ।

( १५३ ) प्र–गल्भायते नामधातुः । प्र–गल्भते गल्भ धार्ष्ट्ये भौवादिकः ।

( १५४ ) तुप्यति तुप् समुच्छ्राये दिवादिः । तूपयति चुरादि पठितस्तूपधातुः ।

( १५५ ) खेटति किट खिट त्रासे भौवादिकः । खेटयति खेट भक्षणे चुरादिगणपठितः ।

मनुते मनुतुल्योसौ प्रजामात्मजवत्प्रभुः ॥
पितृवन्मन्यते तं च मान्यं जनपदः सदा ॥ १५६ ॥
चित्रैश्चित्रयति व्योम सरत्नाभरणांशुभिः ॥
गरीयसा च चित्रेण यस्य चित्रीयते जनः ॥ १५७ ॥
न प्रकुप्यति विप्राय कुप्यते स महाप्रभुः ॥
प्रकोपयति तस्मै स यस्तेन सदृशोऽपरः ॥ १५८ ॥
ईडते वेष्टया ( पा ? ) स्थाने यद्गुणांश्चारणव्रजाः ॥
स्वयं पुलकितो हर्षाद्विडौजाइतयत्यपि ॥ १५९ ॥
अङ्कते पुण्यतीर्थेषु प्रस्तयुञ्ज्ञानि ( ? ) शक्तिमान् ॥
अङ्कयत्यरिसैन्यानि विचित्रैर्युधि सायकैः ॥ १६० ॥
निःशेषयति यः शत्रूञ्छेषदीर्घभुजद्वयः ॥
निःशेषति च दानेन भाण्डागारं दिनेदिने ॥ १६१ ॥

---

( १५६ ) मनुते मनु अवबोधने तनादिगणस्थः । मन्यते मनज्ञाने दिवादिगणपठितः ।

( १५७ ) चित्रयति चित्र चित्रीकरणे चुरादिगणपठितः । चित्रीयते चित्राशब्दाङ्डानुबन्धाच्चित्रीयते इति नामधातुरूपम् ।

( १५८ ) कुप्यति । कुप् क्रोधे दिवादिगणपठितः । कोपयति इति णिजन्तस्य रूपम् । 'पठ पुट–' इति दण्डकपठितश्चौरादिकस्तस्य च ।

( १५९ ) ईडते ईड स्तुतौ अदादिः । इतयति इत स्तुतौ चुरादिः । ईडयतीति पाठे चुरादिगणस्थ इति ज्ञेयम् ।

( १६० ) अङ्कते अकि लक्षणे भौवादिकः । अङ्कयति अङ्क पदे लक्षणे च । चुरादिगणपठितः ।

( १६१ ) निः–शेषयति । शिष् विशेषणे शेषे च चुरादिगणस्थः । निःशेषयति चुरादिः । उक्तप्रायावेवेमौ प्राक् ।

सुलभं सस्यमुञ्छन्ति यद्देशव्रतिनो जनाः ॥
उच्छन्ति च चिराच्छन्देनार्थेन परिपूरिताः ॥ १६२ ॥
परमुद्रासयन्त्येके न भिक्षाव्रतचारिणः ॥
न दीनदुःखितास्ते स्युर्य वसन्त्यस्य मण्डले ॥ १६३ ॥
न काङ्क्षत्यनृतं कश्चिन्न वाञ्छति परस्त्रियम् ॥
सर्वोऽपि धार्मिकस्तत्र तस्य राष्ट्रे स्थितो जनः ॥ १६४ ॥
उद्घाठते न कस्यापि कर्मधर्मपरायणः ॥
उद्घाटयति गोष्ठीषु सर्वेषामेव यो गुणान् ॥ १६५ ॥
स्तेपन्ते यस्य वक्त्रेन्दोर्लावण्यामृतबिन्दवः ॥
यं वीक्ष्य वेपते स्त्रीणां वपुः स्मरशराहतम् ॥ १६६ ॥
हल्लन्ति हस्तिपृष्ठेषु सेनान्यः कोटिशः पुरः ॥
हयन्ते हरयोऽसंख्या यस्य नागाश्च निर्गमे ॥ १६७ ॥

---

( १६२ ) उञ्छन्ति उछि उञ्छे उञ्छः कणश आदानम् । भौवादिकः । उच्छन्ति उच्छी विवासे तुदादिगणपठितः ।

( १६४ ) काङ्क्षति । वाछि इच्छायां काक्षि वाक्षि माक्षि घोरवासवासिते चेति चकारादिच्छायाम् भौवादिगणपठितः । वाञ्छति वाछि इच्छायाम् उक्त एव ।

( १६५ ) उद्घाठते उत्पूर्वाद्घटचेष्टायाम् इति धातो रूपम् भ्वादिः । उद्घाटयति घट संघाते चुरादिः पटपुटेति दण्डके पठितो वा चुरादिरेव ।

( १६६ ) स्तेपन्ते तिपृ तेपृ स्तिपृ स्तेपृ क्षरणार्थाः । वेपते वेपृ कम्पने भौवादिकः ।

( १६७ ) हल्लन्ति हल्लकासने भौवादिकः (?) हयन्ते हय गतौ चौरादिक एव ।

एकोपि विसृजत्याजौ बाणवृष्टिमरातिषु ॥
यस्योपरि विसृज्यन्ते पुष्पवृष्टिं च खेचराः ॥ १६८ ॥
क्षमते यो दरिद्राणां लक्षमप्यागमां प्रभुः ॥
न क्षाम्यति क्षितीशानामपराधकणानपि ॥ १६९ ॥
तितिक्षते क्षमी यस्तु सापराधेषु साधुषु ॥
तेजयन्ति यमाश्रान्तं बन्दिवृन्देरिता गिरः ॥ १७० ॥
यस्य योगनिषण्णस्य भोगतृष्णा श्लथायते ॥
श्लथते दीर्घसंसारग्रन्थिश्चात्मविनिश्चयात् ॥ १७१ ॥
विश्राणयति यः श्रीमाञ्श्रेष्ठेभ्यो विपुलं वसु ॥
विश्रणन्ति च ते यस्यै सत्या वाचः शुभाशिषः ॥ १७२ ॥
व्यायामदृढदेहोपि मन्दते यो न सुन्दरः ॥
मन्दायते क्वचित्कार्थे परार्थे न च कर्हिचित् ॥ १७३ ॥

---

( १६८ ) वि–सृजति सृजविसर्गे तुदादिगणपठितः । विसृज्यन्ते सृज् विसर्गे चुरादौ पठितः ।

( १६९ ) क्षमते क्षमूष् सहने भौवादिकः । क्षाम्यति क्षमूष् सहने दिवादिगण पठितः । ' शमामष्टानां दीर्घः श्यनि' इति दीर्घः ।

( १७० ) तितिक्षते तिज निशाने ' गुप्तिज्किद्भ्यः सन् ' इत्यनेन तिजेः क्षमायां सन् । तेजयन्ति तिज् निशाने चुरादिगणपठितः अयं णिजन्तस्य रूपमिदम् ।

( १७१ ) श्लथायते लोहितादित्वाद् ' लोहितादिडाज्भ्यः क्यष् ' इति क्यषन्तो नामधातुः । श्लथते श्रथ श्लथ बन्धने भौवादिकः ।

( १७१ ) विश्राणयति । चण शण श्रण दाने च चौरादिकः । श्रणन्ति श्रण दाने भ्वादिगणपठितः ।

( १७३ ) मन्दते मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु भौवादिकः । मन्दायते मन्दशब्दाद्भृशादेत्वात् क्यङ् इति नामधातुः ।

अपमृत्युं परित्यज्य सुखं प्राणिति यत्प्रजा ॥
न प्राण्यते परं तस्य प्रतिकूलं करोति यः ॥ १७४ ॥
यो न लुम्पति पूर्वेषां कीर्तिं राज्ञां यदानने ॥
उच्चुलुम्पति लावण्यं नेत्राञ्जलिघटैर्जनः ॥ १७५ ॥
दधते यः सदाचारं सदाचारेण संस्तुतः ॥
दधते शासनं यस्य शिरसा च नरेश्वराः ॥ १७६ ॥
ददते द्रविणं भूरि ब्राह्मणेभ्यः सदैव यः ॥
ददते ब्राह्मणा यस्मै सन्ततेर्नित्यमाशिषः ॥ १७७ ॥
स्रंसते दुरितं राष्ट्रे प्रजाभ्यो यत्प्रभावतः ॥
प्रेर्यमाणशरौघेण स्रसतेऽरिपताकिनी ॥ १७८ ॥
प्रमादेनापि देवाग्निगुरुभ्यः शपते न यः ॥
साक्षात्कृतागसः कोपाद्दासायापि न शप्यति ॥ १७९ ॥

---

( १७४ ) प्राणिति ' श्वस प्राणधारणे अन च ' इत्यदादिगणपठित-चकारात्प्राणधारणार्थकः । रुदादित्वादिडागमः । प्राण्यते अण प्राणने इति दिवादिः ।

( १७५ ) लुम्पति लुप्लृ छेदने तुदादौ मुचादिः । उच्चुलुम्पति । भ्वादेराकृतिगणत्वादयं भ्वादिरेव चुलुम्पधातुः ।

( १७६ ) दधते दध धारणे भौवादिकः । दधते डुधाञ् धारणपोषणयोः जुहोत्यादिः ।

( १७७ ) ददते दद दाने भौवादिकः । ददते डुदाञ् दाने जुहोत्यादिः ।

( १७८ ) स्रंसते स्रंसु अवस्रंसने भौवादिकः । स्रसते स्रसु प्रमादे भ्वादिरेव ।

( १७९ ) शपते शप आक्रोशे भ्वादिः । शप्यति शप आक्रोशे दिवादिः ।

नटन्ति नाटके यस्य चरितं भरतादयः ॥
नाटयन्ति स्फुटं येषां पताकाविक्रमक्रमाः ॥ १८० ॥
होमाग्निधूमसुरभिः पवते मारुतो मृदुः ॥
गोदावरीतरङ्गार्द्रः पुनीते यद्भुवि प्रजाः ॥ १८१ ॥
यो न वञ्चयते कश्चित्सदा सत्यपरायणः ॥
वञ्चयन्ति शरच्चन्द्रशुचयो दिक्षु यद्गुणाः ॥ १८२ ॥
योधिमीमति मीमांसां तदर्थमनुतिष्ठति ॥
पशवोऽपि न मीमन्ति यद्देशे दुःखपीडिताः ॥ १८३ ॥
मुखं कृषति शालेयमिक्षुक्षेत्रं च कर्षति ॥
यत्प्रसादादविज्ञातक्लेशो जनपदः सदा ॥ १८४ ॥
शीकन्ते शीकरासारैर्वायवो दक्षिणोदधेः ॥
शुभ्रावतीतरङ्गार्द्राः शीकयन्ति च यद्वपुः ॥ १८५ ॥

---

( १८० ) नटन्ति नट नृत्तौ भ्वादिः घटादौ पठितः । नाटयन्ति नट अवस्यन्दने अवस्यन्दनं नाट्यं चुरादिः ।

( १८१ ) पवते पूङ् पवने भौवादिकः । पुनीते पूञ् पवने क्र्यादिः । 'प्वादीनां ह्रस्वः' ।

( १८२ ) वञ्चयते वञ्चु प्रलम्भने चुरादिः । वञ्चयन्ति 'वञ्चु तञ्चु त्वञ्चु इति दण्डके पठितश्चुरादिरिव गत्यर्थकः ।

( १८३ ) अधि–मीमति द्रमहम्ममीमृगतौ भौवादिकः । मीमन्ति ए एव शब्दार्थको भौवादिकः ।

( १८४ ) कृषति कृष् विलेखने तौदादिकः । कर्षति कृष विलेखने भ्वादिगणपठितः ।

( १८५ ) शीकन्ते शीकृ सेचने भौवादिकः । शीकयन्ति शीक सेचन एव चुरादिः ।

शब्दायते सदा स्थाने नो पृष्टस्तेन कश्चन ॥
परं शब्दयति द्वास्थः पात्रागमनबोधनात् ॥ १८६ ॥
विलसन्ति रणे तुष्टा यस्य रङ्गोपजीविनः ॥
लासयन्ति रसाभिज्ञा यस्याग्रे भरतोत्तमाः ॥ १८७ ॥
विलपन्त्यबलानां च हृदये मदनव्यथाः ॥
विलापयन्ति ये दृष्ट्वा गुणवन्तोऽपि शत्रवः ॥ १८८ ॥
असौ प्रक्रमते युद्धमेकोऽपि बहुभिः सह ॥
नाक्रामन्ति तथाप्येनं विक्रान्ता बहवोऽपि ते ॥ १८९ ॥
वीयन्ति वीरसन्तानवृद्धौ यस्य कुलाङ्गनाः ॥
विजायन्तेऽवरोधाश्च यत्पुरे गृहवृद्धये ॥ १९० ॥
प्रथते प्रियवद्यस्य पृथिव्यामुज्ज्वलं यशः ॥
प्रथयन्ति प्रथीयांसो गुणाः स्वर्गेऽपि निर्मलाः ॥ १९१ ॥

---

( १८६ ) शब्दायते 'शब्द वैरकलहाभ्रकण्वमेघेभ्यः करणे' इति क्यङ् । शब्दयति शब्द शब्दने इति चुरादिः ।

( १८७ ) विलसन्ति लस् कान्तौ । भ्वादिः । लासयन्ति लस् शिल्पयोगे चुरादिः ।

( १८८ ) विलपन्ति लप् व्यक्तायां भौवादिकः । विलयन्ति इति पाठे लयगतौ भौवादिकः । विलापयन्ति रप् लप् व्यक्तायां वाचि चुरादिः अथवा "लीलोर्नुग्लुकावन्यतरस्यां स्नेह विपातने" इत्यनेन नुग्लुकयोरभावे पुगागमः । विलाययति इति पाठे 'विभाषा लीयते' रित्यात्वाभावे ज्ञेयम् ।

( १८९ ) प्र–क्रमते क्रमु पादविक्षेपे भौवादिकः । 'प्रोपाभ्यां समर्थाभ्यां' इत्यात्मनेपदम् । आ–क्रामन्ति । 'क्रमः परस्मैपदेषु' इति दीर्घः 'वा भ्राशभ्लाशभ्रमुक्रमु–इत्यनेन श्यनि क्राम्यति इत्यपि ।

( १९० ) वीयन्ते वी गतौ वृद्धौ च दिवादिः । विजायते जनी प्रादुर्भावे 'ज्ञाजनोर्जा' दिवादिः ।

( १९१ ) प्रथते–प्रथ प्रख्याने भौवादिकः । प्रथयन्ति चौरादिण्यन्तः ।

अमन्ति व्याधयोप्येनं न कदाचिद्भयादिव ॥
अमयन्ति प्रमल्पं च तमनामिकरोति सः ॥ १९२ ॥
विष्णाति विषवत्प्राणांस्त्रयीधर्मद्विषामसौ ॥
वेवेष्टि विष्टपं यस्य कीर्तिः सर्वातिशायिनः ॥ १९३ ॥
निःशेषं शेषति क्रोधात्प्रतिपक्षक्षमापतीन् ॥
एकं शेषति यः शेषे भूभारभरणे ध्रुवम् ॥ १९४ ॥
क्षिपति प्रतिपक्षाणां हृदये भक्षजं ज्वरम् ॥
क्षिप्यन्ति श्रोत्रियाणां च निःकम्पक्षणमात्रये ॥१९५॥
लपति स्निग्धया वाचा सैत्रैव समं प्रभुः ॥
सकृद्दृष्टेन च प्रेम्णा साल्हादं जापयत्यसौ ॥ १९६ ॥
यौति काले कुलस्त्रीभिः क्षत्रसन्तानवृद्धये ॥
युनाति यौवनस्थोपि वेश्यायां बन्धकीजने । १९७ ॥
नरो जयति यः कांश्चित्प्राणिनः करुणान्वितः ॥
तस्य धर्मरते रोगा न रुजन्ति प्रजा अपि ॥ १९८ ॥

---

( १९२ ) अमन्ति अमरोगे । अमयन्ति अमरोगे चौरादिकः ।

( १९३) विष्णाति विष विप्रयोगे क्र्यादिगणपठितः । वेवेष्टि विष्लृ व्याप्तौ जुहोत्यादिगण पठितः ।

( १९४ ) शेषति 'कष खष शिष' इति दण्डकपठितो भौवादिकः । शेषति शिष सल्लोपयोगे ( ? ) ।

( १९५ ) क्षिपति क्षिप प्रेरणे तुदादिगणपठितः । क्षिप्यन्ति क्षिप प्रेरणे दैवादिकः ।

( १९६ ) लपति रप लप व्यक्तायां वाचि भौवादिकः । जापयति जप व्यक्तायां वाचि चुरादौ पठितः ।

( १९७ ) यौति युमिश्रणे अदादिगणस्थः । युनाति युञ् बन्धने क्र्यादिगणपठितः ।

( १९८ ) जयति जिजये भौवादिकः । रुजन्ति रुजो भङ्गे तुदादौ पठितः ।

अन्तर्विद्यामसौ विप्रान्न म्लेच्छति धृतव्रतः ॥
न म्लेच्छयति धर्मज्ञो विवादे वादिभिः सह ॥१९९॥
सम्पश्यते मतिर्यस्य त्रैलोक्येपि स्वगेहवत् ॥
सम्पश्यति परः सेनां सागरान्ते महीतले ॥ २०० ॥
सुखं निंस्ते मुखं स्त्रीणां यत्प्रजा प्रीतिपालिता ॥
निङ्क्षति स्तनवक्त्रोरुकपोलाक्षिललाटकम् ॥ २०१ ॥
विलोक्य यं विघटते कोपाटोपो मृगीदृशाम् ॥
विघाटयति चास्फोटन् वैरिणां करिणां घटाः॥२०२॥
निस्तनन्ति न दुःखार्त्तास्तद्देशे निरुपद्रवे ॥
स्तनयत्युग्रशब्देन पर्जन्योपि न भीतिवत् ॥ २०३ ॥
रसन्ति मधुरैः कण्ठैर्यस्योद्याने पतत्रिणः ॥
रसयन्ति च हृद्यानि तत्फलान्यनिवारिताः ॥ २०४ ॥
लजते लाञ्छनस्यन्दोः क्षत्रियः श्रोत्रियो ह्यसौ ॥

---

(१९९) म्लेच्छति म्लेच्छ अव्यक्तायां वाचि । म्लेच्छयति लप व्यक्तायां वाचि म्लेच्छ च इति चुरादौ पठितः ।

(२००) संपश्यते । दृशिर्प्रेक्षणे 'समो गम्यृच्छिभ्यां—वा गमः—वेत्तेर्विभाषा' अत्र वार्तिकम् । अर्ति—श्रु—दृशिभ्यश्चेति वक्तव्यम् ' इति समुपसर्गयोगे अकर्मकादात्मनेपदम् । संपश्यति आत्मनेपदाभावे सकर्मके ।

(२०१) निंस्ते णिसि चुम्बने अदादिः । निङ्क्षति णिक्ष चुम्बने भौवादिकः नुमागमः ।

(२०२) वि— घटते घटचेष्टायां भ्वादिर्विपूर्वः । विघटयति 'पट पुट'—इति दण्डकपठितश्चुरादिः संघातार्थे ।

(२०३) निस्तनन्ति । ष्टन वन शब्दे भौवादिकः । स्तनयति स्तनशब्देचुरादावदन्तः । तेन नोपधादीर्घः ।

(२०४) रसन्ति रसशब्दे भौवादिकः । रस आस्वादनस्नेहनयोः चुरादिगणपठितः ।

(२०५) लजते, लज्जते ओलजी ओलस्जी व्रीडने तुदादौ पठितावुभा·

लज्जते लज्जिनीनां च वार्ताकर्णनतोपि यः ॥ २०५ ॥
यस्तोलयति दारिद्र्यकर्दमे पतितान्नरान् ॥
तुलयत्यपि देवेंद्रं संग्रामे भुजविक्रमात् ॥ २०६ ॥
न शोचति शुभाचारो यो मृतानपि बान्धवान् ॥
शोचयत्यतिनिःसारं संसारं सारधीरसौ ॥ २०७ ॥
नोहिर्दंशयते कश्चित्तत्कृत्यगरुडाज्ञया ॥
यदि प्रमादाद्दशति तस्मिन्न क्रमते विषम् ॥ २०८ ॥
यं परिक्षिप्य लक्षं हि पदयन्ते पदातयः ॥
आहवे जयलक्ष्मीश्च तस्य सम्पद्यते ध्रुवम् ॥ २०९ ॥
योश्व लाभयति व्यूहं प्रतिपक्षक्षमाभुजाम् ॥
लभतेर्थं ततो भूमिहेमहस्तिहयादिकम् ॥ २१० ॥
श्रियो हृत्वापि शत्रूणां न प्रहर्षति यः श्रिया ॥
यथा प्रहृष्यति श्रुत्वा सत्कवीनां सुभाषितम् ॥ २११ ॥
धर्मो धर्मस्य दानेपि यो हि दोलायते वचः ॥

---

वष्यात्मनेपदिनौ ।

( २०६ ) तोलयति तुल उन्माने । तुलयति तुलाशब्दात् ' तत्करोति तदाचष्टे ' इति णिचि रूपम् ।

( २०७ ) शोचति शुच शोके । शोचयति शुचि पैशुन्ये चुरादिः ।

( २०८ ) दंशयते दशि दंशने चुरादिः । दंश दशने दशनं दंष्ट्रव्यापारः दशति ' दंशसञ्जस्वञ्जां शपि ' इति न लोपः ।

( २०९ ) पदयन्ते पदगतौ चुरादावदन्तः । संपद्यते पद गतौ दिवादिः सम्पूर्वः ।

( २१० ) लाभयति, लाभ प्रापणे चुरादिः । लभते डुलभष् प्राप्तौ भौवादिकः ।

( २११ ) प्रहर्षति हृषु अलीके भौवादिः । प्र-हृष्यति हृष् तुष्टौ दिवादिगणपठितः ।

( २१२ ) दोलायते एला खेला दोला विलासे चुरादिः । दोलयति

दोलयत्यरिवर्गस्य जीविताशां च यः सदा ॥ २१२ ॥
वाहते वाहिनीं हन्तुं बाहुभ्यामाहवे बुधः ॥
वहते विहताराते बहुरूपां च यः श्रियम् ॥ २१३ ॥
स्वेदते किल सर्वोऽपि वपुष्मानूषणान्वितः ॥
ननु स्विद्यति तस्याङ्गं व्यायामजितमेदसः ॥ २१४ ॥
अतिचित्राणि वस्त्राणि व्यूयन्ते यस्य कौतुकात् ॥
विज्ञानिका वयन्ते च वयं ते यद्विकादिकम् (?)२१५॥
वाति वायुश्च सुरतौ तावन्मात्रोऽतिभीतवत् ॥
उद्वेपति यथा स्त्रीणां स्वेदार्द्रसुरते वपुः ॥ २१६ ॥
ऊर्जन्ति विविधाभिश्च विद्याभिर्यस्य वारणाः ॥
ऊर्जयन्ति च दानेन संमानेन पदातयः ॥ २१७ ॥
आयच्छति रणे मौर्वीमसौ यावद्विवित्सया ॥
तावदार्छति शत्रूणां तस्य वारणपद्धतिः ॥ २१८ ॥

---

दुल उत्क्षेपे चुरादिगणपठित एव ।

(२१३)वाहते। वेहृ जेहृ बाहृ प्रयत्ने। वहते।वह प्रापणे प्रापणमिह गतिः ।

(२१४) स्वेदते। ञिष्विदा गात्र प्रक्षरणे। मोदने इति केचित्। ष्विद प्रक्षरणे इति वा। स्विद्यति ञिष्विदा गात्रप्रक्षरणे दिवादिगणपठितः ।

(२१५) व्यूयन्ते। विपूर्वं ऊयी तन्तुसन्ताने भौवादिकः। वयन्ते वेञ् तन्तुसन्ताने भौवादिकः।

(२१६) वाति। वा गतिगन्धनयोः आदादिकः । उद्वेपति टुवेपृ कम्पने भ्वादिगणपठितः ।

(२१७) ऊर्जन्ति ऊर्ज बलप्राणनयोः भौवादिकः । एवमेव चुरादिषु पठितः। ऊर्जयन्ति ।

(२१८) आ-यच्छति दाण् दाने भौवादिकः । "प्राघ्राध्मास्थाम्नादाण्—" इत्यादिना यच्छादेशः। आर्च्छति आङ् पूर्वं ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु। आञ्छति इति पाठे आछि आयामे भौवादिक एव अयमेव साधुरिति भाति ।

मोदयन्ति यदुद्याने सारुणं पुष्परेणवः ॥
हृद्यन्तमुग्रमाघ्राय मोदन्ते च नरस्त्रियः ॥ २१९ ॥
बाह्येराचमनस्नानप्रायश्चित्तेन शुध्यति ॥
अन्तः शुचीयते सम्यक् परमात्मनि निश्चयात् ॥२२०॥
यत्प्रजानामुपद्रुत्यै पर्जन्योऽपि न गर्जति ॥
गर्जयन्ति कथं चान्ये भेद्यकाये च तस्कराः ॥ २२१ ॥
स्नाति गङ्गाजलैर्नित्यं यत्र देशे क्वचिद्वसन् ॥
यः स्नायति जनान् सर्वान् विसनन्तुसितैर्गुणैः ॥ २२२॥
दृढं धर्मे विलग्नस्य यस्य न च्यवते पदम् ॥
चीवति स्वर्गलोकान्तं यत्कीर्तिः सुकृतात्मनः ॥ २२३॥
स्वरति स्निग्धया वाचा सर्वानानन्दयत्यसौ ॥
स्वरयत्यरिराष्ट्रेऽपि न च कंचित्परिग्रहम् ॥ २२४ ॥
समन्ति यद्वियोगेन सीमन्तयन्यः स्वरातुराः ॥
यः सामयति सामज्ञः स्निग्धैरालोकनैश्च ताः ॥ २२५॥
हिताहितं प्रजानां यः प्रेक्षते नित्यमात्मनः ॥
प्रेक्षयत्याखिलानां च कर्म तद्विनियोजितम् ॥ २२६ ॥

---

(२१९) मोदयन्ति मुद् संसर्गे चुरादिगणपठितः । मोदते मुदी हर्षे भौवादिगणपठितः ।

(२२०) शुच्यति शुच अभिषवे अभिषवः स्नपनं पीडनं स्नानं सुरासंधानं च । शुचीयते भृशादित्वात्क्यङ् ( नामधातुः ) ।

(२२१) गर्जति गर्जशब्दे भौवादिकः । गर्जयन्ति गर्ज मार्ज शब्दार्थयोः चुरादिगणपठितः ।

(२२२) स्नाति ष्णा शौचे आदादिकः । स्नायति ष्णैवन्धने भौवादिकः ।

(२२३) च्यवते च्युच्यवने भौवादिकः। चीवति चीवृ गतौ भौवादिकएव ।

(२२४) स्वरति स्वृशब्दोपतापयोः भौवादिकः । स्वरयति स्वर आक्षेपे चुरादिगणस्थः ।

(२२५) समन्ति । सम ष्टम वैक्लव्ये भौवादिकः । सामयति साम सान्त्व प्रयोगे चौरादिकः ।

(२२६) प्रेक्षन्ते ईक्ष दर्शने भौवादिकः । ईक्षदर्शन.ङ्कनयोश्चुरादिः ।

अभिलष्यति साधूनामुदयं सर्वदैव यः ॥
साधुलोकोपि निःसीमं तस्याभिलषति श्रियम् ॥ २२७ ॥
कायः क्लाम्यति नाक्रन्दे यस्य प्रहरतो रिपून् ॥
क्लामन्ति रिपुसेनाश्च वेपमाना दिशो दश ॥ २२८ ॥
यः स्वप्नेनापि चात्मीयं गुणं क्वापि न कथ्यते ॥
कथयत्यादिराजानां चरितानि सहस्रशः ॥ २२९ ॥
व्यनक्ति यच्छरीरस्थं लक्षणं सार्वभौमता ॥
आभुनक्ति न गोदोहं यद्देशे याज्ञिको जनः ॥ २३० ॥
आचुटन्ति नखैर्बाहुं मुखमाचोटयन्ति च ॥
यद्बाहुकृतवैधव्या रुदन्त्यो यदरिस्त्रियः ॥ २३१ ॥
विपाशयति यः शत्रून् बन्धनैरखिलानपि ॥
विपाशयति चात्मानं ज्ञानात्कर्मक्षयं नयन् ॥ २३२ ॥
घूर्णते शात्रवस्यापि यद्गुणश्रवणे शिरः ॥
मित्रोदासीनवृत्तीनां घूर्णतीति किमद्भुतम् ॥ २३३ ॥

---

( २२७ ) अभिलष्यति लष्कान्तौ दिवादिरुभयपदी । अभिलषति लषकान्तौ कान्तिरिच्छाभौवादिकः ।

( २२८ ) क्लाम्यति क्लमुग्लानौ दिवादिः ‘ ष्ठिवुक्लमुचमां शिति ’ इत्यनेन श्यनो विकल्पत्वेन सिद्धिः ।

( २२९ ) कथ्यते कत्थ श्लाघायाम् भौवादिकः । कथयति कथ वाक्यप्रबन्धे । चुरादिः ।

( २३० ) व्यनक्ति अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु रुधादिः । विपूर्वः आ—भनक्ति भञ्जो आमर्दने रुधादिरेव । आङ्पूर्वः ।

( २३१ ) आ—चुटन्ति चुट् छुट् छेदने तुदादिः । चोटयन्ति चुट खुट त्रुट छेदने इति चुरादिरपि ।

( २३२ ) विपाशयति पश् बन्धने चुरादिर्विपूर्वः । द्वितीयं विपाशयति विपाश उत्तरे कूले इति चुरादिः ।

( २३३ ) घूर्णते घुण भ्रमणे भौवादिकः आत्मने पदी । घूर्णति घुण घूर्ण भ्रमणे तुदादिः परस्मैपदी ।

यस्य लक्ष्मीर्विकसति प्रजा धर्मेण रक्षतः ॥
विकासन्ते च भूयांसो गुणाः श्रवणहारिणः ॥ २३४॥
क्लिन्ति ललनाः कामं क्रीडन्ति स्थविरा अपि ॥
अज्ञातव्याधिवैक्लव्यसुखिता यस्य मण्डले ॥ २३५ ॥
यः कूटयति शत्रूणां दृष्ट्या गजघटा रणे ॥
संकुटन्ति भयाक्रान्ताः शत्रवो यस्य दर्शनात् ॥२३६॥
क्रपते कृपणेष्वेवं कृपयार्जितविक्रमः ॥
प्रचुरं प्रार्थितोप्यर्थं नासौ कृपयति प्रभुः ॥ २३७ ॥
अजस्रैरश्रुभिः शत्रुस्त्रीणां धौतमिवाधिकम् ॥
यद्यशः श्वितते दिक्षु स्वेदते च सुरालये ॥ २३८ ॥
कुशस्थलं पथयति पन्थयत्युत्तरापथम् ॥
यद्दण्डखण्डिताशेषप्रचण्डरिपुमण्डलम् ॥ २३९ ॥
ह्लादते स्निग्धगम्भीरं यद्देशे वर्षुको घनः ॥
ह्लादते तस्य लोकेषु कृषीवलजनोप्यलम् ॥ २४० ॥

---

(२३४) वि-कसति कस गतौ विपूर्वः भ्वादिः । विकासन्ते कासृ भासृ दीप्तौ भौवादिकः ।

(२३५) क्लिन्ति क्लिद शैत्यक्रीडनयोः दिवादिः । क्रीडन्ति क्रीडृ विहारे भौवादिकः ।

(२३६) कूटयति कूट छेदने चौरादिकः । संकुटन्ति कुटकौटिल्ये तुदादिप्रकरणोक्तः ।

(२३७) क्रपते क्रप कृपायां भौवादिकः । कृपयति सारकृप दौर्बल्ये चुरादिगणपठितः ।

(२३८) श्वितते श्विता वर्णे भौवादिकः । स्वेदते ञिष्विदा मोचने तुदादिः ।

(२३९) पथयति पथ गतौ चुरादिगणपठितः । पन्थयति पन्थ च चकाराद्गतौ चुरादिरेवायम् ।

(२४०) ह्लादते ह्लाद अव्यक्ते शब्दे भौवादिकः । ह्लादते ल्हादी सुखे चेति भौवादिकः ।

याश्चाचञ्चलेन मूर्च्छन्ति यद्गुणाः शशलाञ्छने ॥
स स मूर्च्छति येनासौ दृष्टः सहृदयः प्रभुः ॥ २४१ ॥
कृणाति तृणवद्युद्धे शरजालेन यो रिपून् ॥
कृणन्ति विद्रुता यस्य दिङ्मुखेषु रिपुव्रताः ॥ २४२॥
लक्ष्मीमालिङ्गति स्नेहाद्यः सदा पुरुषोत्तमः ॥
आलिङ्गयति रत्नानां जालेन मणिकुट्टिमम् ॥ २४३ ॥
यथा सुवति संग्रामे स्वयमेव जनेन यः ॥
सोमं सुनोति यज्ञेषु परलोकजिगीषया ॥ २४४ ॥
मनो मादयते यस्य शास्त्राभ्यासरसायनात् ॥
सर्वलोकातिशायिन्या न विभूत्या समाद्यति ॥ २४५ ॥
स्निह्यति ज्ञातिवर्गेषु स्नेहयत्यार्यबन्धुषु ॥
रणे शूरयते यस्य शूर्यते द्विषतां रणे ॥ २४६ ॥
यः शीलति सदा धर्मं शीलयत्यात्मनो हितम् ॥

(२४१) मूर्च्छन्ति मुर्छामोहसमुच्छ्राययोः इति समुच्छ्रायार्थः मूर्छति स एव मोहार्थः।

(२४२) कृणाति कॄञ् हिंसायाम् क्र्यादौ प्वादिः तेन ह्रस्वत्वम् अ-यमुभयपदी। कृणन्ति कृण् गतौ तुदादिः।

(२४३) आलिङ्गति 'उख उखि'–इत्यादि दण्डकपठितो भौवादिक आङ् पूर्वः। आलिङ्गयति लिगिबन्धने चुरादिगणपठितः।

(२४४) सुवति। षूप्रेरणे तुदादिगणपठितः। सुनोति षुञ् अभिषवे अभिषवः स्नपनं पीडनं स्नानं सुरासन्धानं च। स्वादिभ्यःश्नुः।

(२४५) मादयते मदतृप्तियोगे चुरादिः। माद्यति मदी हर्षग्लेपनयोः दिवादौ शमादिः तेन 'शमामष्टानां दीर्घः' इति दीर्घः।

(२४६) स्निह्यति ष्णिह प्रीतौ दिवादिः। स्नेहयति ष्णिह स्नेहने चुरादिः। शूरयते। शूरवीर क्रान्तौ चौरादिकः। शूर्यते शूरी हिंसास्तम्भनयोः दिवादिगणपठितः।

(२४७) शीलति शीलसमाधौ भौवादिकः। शीलयति शीलउपधार-णे चुरादिगणस्थः। स्तमति ष्टमवैक्लव्ये भौवादिकः। ताम्यति तमुकाङ्क्षायां

न च स्तमति शोकेन न च
छिनत्ति नित्यमज्ञानं छेदयत्यहिता
साध्नोति धीः सदा यस्य साध्यति श्री
एषते यः सदामार्गं गवेषयति च व्रतम् ॥
यत्किञ्चिदप्यधीतेऽसौ तदध्येति तदक्षरम् ॥ २४
आलोचने सद्वानीतिमालोचयति सत्क्रियाः ॥
आलोकन्ते यमेणाक्ष्यो नालोकयति यश्च ताः॥२५०॥
यो न कुत्सयते कुत्सान् न च कुत्सति लिङ्गिनः ॥
न भर्त्सति विकर्मस्थान्न च भर्त्सयते भृतान् ॥ २५१ ॥
मण्डयन्ति गुणाः सर्वे यो गुणानेव मण्डति ॥
भूषणं भूषयत्यन्यं स तु भूषति भूषणम् ॥ २५२ ॥
उन्मूलयति यः शत्रुमुन्मूलति तमांसि च ॥
वायुं च प्रीतत्यात्मीयं प्रीतयत्यरिमण्डलम् ॥ २५३ ॥
निर्बर्हयति बुद्ध्यारीन् स्वयमर्हो निर्बर्हते ॥

---

दिवादिः शमादित्वाद्दीर्घः ।

(२४८) छिनत्ति छिदिर् द्वैधीकरणे रुधादिः। छेदयति पूर्वोक्त एव चुरादिगणे पठितः। साध्नोति राध साध संसिद्धौ स्वादिः।साध्यति दिवादिर्ज्ञेयः ।

( २४९ ) एषते एषृ गतौ भौवादिकः । गवेषयति गवेष मार्गणे चुरादिः । अधीते इङ् अध्ययने नित्यमधिपूर्वः अदादिः । अध्येति इक स्मरणे अधिपूर्व एव ।

( २५० ) आलोचयति लोचृ दर्शने चुरादिः आङ् पूर्वः । भ्वादिरपि तेन आलोकन्ते लोक दर्शने भौवादिकः। आलोकयति उक्त एव चुरादिः ।

(२५१) कुत्सयते कुत्स कुत्सने चौरादिकः।कुत्सति कुत्स अवक्षेपे भौवादिकः।भर्त्सति भर्त्स भर्त्सने भौवादिकः । भर्त्सयति स एव चौरादिकः ।

( २५२ ) मण्डयति मडि भूषायां चुरादिगणस्थः इदित्करणं णिचः पाक्षिकत्वे लिङ्गं तेन मण्डति । भूषयति भूष अलंकारे चुरादिगणपठितः भूषति । भौवादिकः ।

( २५३ ) उन्मूलयति मूल रोहणे चुरादिर्भ्वादिश्च तेन उन्मूलति । प्रीणाति प्रीतयति प्रीत प्रतिष्टम्भे प्रीत अवगाहने भौवादिकः चौरादिकश्च ।

( २५४ ) बर्हं बल्हप्राधान्ये चुरादिर्भ्वादिश्चोभयपदी बर्ह प्राधान्यहिंसा

याश्चाच्छलेन मर्त्योऽपीन्द्रत्वमर्हति ॥ २९४ ॥
न स मूर्च्छेद्दिवान् नमस्यति गुरून् द्विजान् ॥
कृणाति कीर्त्या सत्सङ्गमनुरुध्यते ॥ २९५ ॥
न्द्रायते नासौ न निद्रायति सन्ध्ययोः ॥
गृध्यति परद्रव्यं न च गर्हयतेऽपरम् ॥ २९६ ॥
तूर्यते न क्वचित्कार्ये त्वरते धर्म एव यः ॥
ध्वनन्ति यद्गुणान् मर्त्या ध्वनयन्ति च खेचराः ॥ २९७ ॥
तर्जयन्तेऽहितं भूमौ नान्यं तर्जति सज्जनम् ॥
न दुनोति परं वाचा दुर्जनोक्त्या न दूयते ॥ २९८ ॥
न सूदते मतिर्यस्य यः सूदयति शात्रवम् ॥
चिकित्सति च स व्याधिं साधु केतयति प्रजाः॥२९९॥
यो जुषन्ति प्रजारिष्टं जुषते यः सुखं सदा ॥
सत्यं सङ्गिरते यश्च गृणाति सुभगं वचः ॥ २६० ॥

---

परिभाषणेषु । अर्हयति अर्हति अर्हपूजायां चुरादिर्भ्वादिश्च ।

( २५५ ) नमति णम प्रह्वत्वे शब्दे भ्वादिगणपठितः । नमस्यति । न॰ मोवरियश्चित्रङः क्यच्' । करणे इत्यनुवृत्तेः क्रियाविशेषे पूजायामाश्चर्ये च नमस्यति देवान् पूजयतीत्यर्थः । रुणद्धि रुधिर् आवरणे 'रुधादिभ्यः श्नम्' । अनुरुध्यते अनोरुध कामे दिवादिः ।

( २५६ ) निद्रायते द्रै स्वप्ने निपूर्वः भौवादिकः । निद्रायति परस्मैपदी॰ स एव । गृध्यति गृधु अभिकाङ्क्षायाम् । गर्हयते अयमेव चुरादिः ।

( २५७ ) तूर्यते तूरी त्वरणहिंसनयोः दिवादिः । त्वरते ञित्वरासंभ्र॰ मे । ध्वनन्ति ध्वन शब्दे ध्वनयन्ति चुरादिगणपठितः ।

( २५८ तर्जयते तर्ज भर्त्सने । स एव भौवादिकः परस्मैपदी तर्जति । दुनोति दुञ् परितापपरिचरणयोः । दूयते दूङ् परितापे दिवादिः ।

( २५९ ) सूदते षूद क्षरणे । भौवादिकः । सूदयति षूद आस्तरणे चौ॰ रादिकः । चिकित्सति कित रोगापनयने संशये च भौवादिकः स्वार्थे सन्न॰ न्तस्य रूपम् । केतयति संकेत ग्राम कुण गुण चामन्त्रणे णिजन्तस्य रूपम् ।

( २६० ) जुषन्ति जुष प्रीतिसेवनयोः अयं तुदादिः । जुषते अयं भौ॰ वादिकः । संगिरते गॄ निगरणे तुदादिः । गृणाति गॄ निगरणे क्र्यादिः प्वा॰ दीनां ह्रस्वः ।